ISSN :- 0974 - 8946

अनुसन्धान–प्रकाशन–विभागीया

त्रैमासिकी शोध–पत्रिका

# शोध–प्रभा

**(A REFEREED QUARTERLY RESEARCH JOURNAL)**

४० वर्षे द्वितीयोऽङ्कः ( अप्रैलमासाङ्कः ) २०१५ ई०

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

कुलपतिः

सहसम्पादकः

**डॉ० ज्ञानधरपाठकः**




प्रकाशन–स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली–११००१६

प्रकाशकः
**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**
(मानित-विश्वविद्यालयः)
कुतुब इन्स्टीट्यूशनल एरिया,
नवदेहली-११००१६



ISSN :- 0974 - 8946

४० वर्षे द्वितीयोऽङ्कः (अप्रैलमासाङ्कः) २०१५ ई०



मुद्रकः
**अमरप्रिंटिंगप्रैसः**
दिल्ली
amarprintingpress@gmail.com

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ,** नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्। अनन्ताः किल ज्ञानविषयाः, अनन्तमपि ज्ञानम्। ज्ञानानां समेषां चरमं लक्ष्यं त्वेकमेव। तस्यैव लक्ष्यस्योपलब्धये व्यापारयन्ति विपश्चितो शेमुषीं स्वां नानामार्गैः। यथा लोके गन्तव्यमेकमेव, पन्थानस्तु भूयांसः, तथैव नानाप्रकारकबुद्धिविलासैः लक्ष्यं तदनुभवितुमुपलब्धुं च पण्डिताः सरणीरनेका आविष्कुर्वन्तीति भारतीयज्ञानावधारणायां नानाशास्त्रपरम्पराः प्राचीनकालादद्यापि चिन्तित-सुचिन्तित-परिचिन्तिततया आविर्भूताः, आविर्भवन्ति च। अद्यापि शास्त्रीयसिद्धान्तानां सिद्धानां पुनः पुनः पारम्परिकयाऽऽधुनिकया च रीत्या विमर्शाः विद्वद्भिः व्याह्रियन्त इति समुन्मीलन्ति शास्त्रव्याख्यानां नानादिशः। शास्त्रपरम्परायां यथाऽऽदर उत्तरपक्षस्य सिद्धान्तपक्षस्य वा, तथैव ग्रहणं पूर्वपक्षस्य। पूर्वोत्तरपक्षयोर्यथास्थानं सन्निवेशेन शास्त्रोपस्थापनप्रकारः पुष्कलीभवति। विप्रलम्भेन सम्भोगस्येव पूर्वपक्षेणोत्तरपक्षस्य पुष्टिः सम्भवति, सुक्ष्मतरीभवति च विदुषां बुद्धेः तार्किकी सूक्ष्मता। अतः शास्त्रीयविषयबिन्दूनां पुनः पुनर्ग्रन्थिमोचनं शास्त्रगौरवायैव। तमिममभिप्रायं मनसिकृत्य शोधप्रभाया अङ्कोऽयं परिवेषयति शास्त्रादरवतां समक्षं शास्त्रपरिनिष्ठितदृष्टीनां विदुषां काँश्चन नूत्नविचारान्। अत्र त्रिपाठिहरेरामस्य योगोपनिषदां पुनश्चर्चा, महापात्रविष्णुपदस्य साङ्ख्यसत्कार्यवादस्य पुनश्चिन्तनम्, कोण्डिन्न्यायनसुमेधोवर्धनस्य पापिनां चन्द्रलोकगमनागमनप्रसङ्गे ब्रह्ममीमांसायाः पुनः परामर्शः, झोपाह्वसुन्दरनारायणस्यान्विक्षिकीपरम्पराऽऽयतिप्रदर्शनम्, मीणामेघराजस्य शाङ्कर-काश्मीरशैवदर्शनालोडनम्, जैनानेकान्तस्य जैनमङ्गलदिग्दर्शनम्, झासुमनकुमारस्य पाश्चात्यसाहित्यिकविमर्शः, उपेन्द्ररावस्य काव्यशिक्षणनवकौशलसन्दर्शनमित्यादयः सुरगिरा प्रस्तुताभिः रचनाभिः, अथ च राष्ट्रगिरा खन्नासङ्गीतायाः कर्मसिद्धान्तपुनरवलोकनम्, शुक्लसन्तोषकुमार-शाण्डिल्यशिवलोचनयोः भाट्टमीमांसापुनरनुशीलनम्, पीकेपण्डावर्यस्य काव्ये लोकव्यवहारसम्बन्धः, शुक्लरजनीशस्य प्राकृतभाषायाः कालिदासीयरूपकेषु प्रयोगसुषमा, ऋचायाः भरतनाट्यदार्शनिकविचारः, मीनाबाबूलालस्य पौराणिकार्थशास्त्रालोकनमित्यादयश्च परिचिन्तितैः शोधनिबन्धैः प्रकाशिता प्रतिभाविशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोऽहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थये सुमनसः विदुषः।

**प्रो. रमेशकुमारपाण्डेयः**
कुलपतिः

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग

# योगोपनिषत्सु प्राणायामस्य स्वरूपविमर्शः

**प्रो. हरेरामत्रिपाठी**

षद्लृ "विशरणगत्यवसादनेषु" उप+नि उपसर्गपूर्वकषद्लृ धातुतः क्विप्प्रत्यये कृते सति उपनिषच्छब्दस्य निष्पत्तिर्भवति। तस्यार्थः यस्मात् ब्रह्मणः साक्षात्कारो भवति तदुपनिषदिति। उपनिषत्सु ब्रह्मज्ञानस्य वा ब्रह्मविद्यायाः प्रधानत्वादुपनिषत्तु अध्यात्मविद्येति कथ्यते। ब्रह्मणः प्रतिपादको वेदस्य अन्तिमोभागः उपनिषच्छब्देनोच्यते। तस्यापरं नाम वेदान्तदर्शनं वोत्तरमीमांसा इति। ब्रह्मज्ञानम्, आत्मज्ञानं वा महाविद्या तस्य विषयो वर्तत इति। अमरकोशानुसारं "धर्मे रहस्युपनिषत् स्यात्" इति पंक्तिमाश्रित्य उपनिषद्शब्दस्यार्थो गूढ़धर्मः[1] गूढ़रहस्यं वा। तत्रापि योगशब्दस्यार्थः समाधिः। शास्त्रेषु योगशब्दस्यानेके अर्थाः भवन्ति। संयोग योग इत्युक्तो जीवात्मपरमात्मनोः याज्ञः।

**परेण ब्रह्मणा सार्धमेकत्वं यन्नृपात्मनः।**
**स एव योग विख्यातः किमन्यद् योगलक्षणम्।।[2]**

**जलसैन्धवयोः साम्यं तथा भवति योगतः।**
**तथात्ममनसोरैक्यं समाधिरिह भाष्यते।।**

"चित्तवृत्तीनां निरोध एव योगः" इति पतञ्जलयः वदन्ति। ध्यानबिन्दूपनिषदि योगस्य षडङ्गानि प्रतिपादितानि सन्ति। आसनप्राणायामप्रत्याहारधारणाध्यानसमाधयः इति।

अत एव ध्यानबिन्दूपनिषदि उक्तम्–

**आसनं प्राणसंरोधः प्रत्याहारश्च धारणा।**
**ध्यानं समाधिरेतानि योगाङ्गानि भवन्ति षट्।।[3]**

यद्यपि प्राणायामस्य लक्षणमत्र नोपलभ्यते पूरककुम्भकरेचकानां विवरणं दरीदृश्यते। प्राणायामपूर्वकं प्रणवस्य ध्यानमत्र वर्तते तदित्थमस्ति।

**हृत्पद्मकर्णिकामध्ये स्थिरदीपनिभाकृतिम्।**
**अङ्गुष्ठमात्रमचलं ध्यायेदोंकारमीश्वरम्।।**

---

1. योगोपनिषदों का सारतत्त्व पृ. 23
2. योगोपनिषदों का सारतत्त्व अ. योग का स्वरूप एवं व्युत्पत्ति, पृ. 30-31
3. योगोपनिषद् ध्यानबिन्दूपनिषत्, पृ. 196

**इडया वायुमापूर्य पूरयित्वोदरस्थितम्।**
**ओंकारं देहमध्यस्थं ध्यायेज्ज्वालावलीवृत्तम्।।**

**ब्रह्मा पूरक इत्युक्तो विष्णुः कुम्भक उच्यते।**
**रेचो रुद्र इति प्रोक्तः प्राणायामस्य देवताः।।**

**अमृतनादोपनिषदि षडङ्गो योग इत्युक्तमिति।।**[1]
**प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा।**
**तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते।।**[2]

यथा पर्वतधातूनां मलाः दह्यन्ते तथैव इन्द्रियकृतदोषाः प्राणधारणात् दह्यन्ते। प्राणायामस्य त्रिविधोः भेदोऽत्रोपलभ्यते। कुम्भकरेचकपूरकभेदेन प्राणायामाः त्रयः प्रोक्ताः सन्ति।

प्राणायामस्य सामान्यं लक्षणं प्रतिपादयन्नाह–

**सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।**
**त्रिः पठेदायतप्राणः प्राणायामः स उच्यते।।**[3]

अर्थात् यदा कुम्भकस्य अवस्था भवति तदा ॐभूः इति प्रणवसंपुटितसप्तव्याहृतिभिः 'परोरजसे सावदोम्' इति शिरसा च सह गायत्रीं त्रिवारं मनसा जपेत्। बाह्याकाशे वायुमुत्क्षिप्य दुग्धधारावत् मन्दं मन्दं विरेच्य अन्तः निरात्मकं वायुं शून्यं कृत्वा शून्यभावे नियुञ्जीयात् इति यत्तत् रेचकस्य स्वरूपम्।[4]

यथा नरो वक्त्रेण वस्त्रस्थोत्पलनालेन वा तोयम् आकर्षयेत् एवम् इडया पिङ्गलया शीतल्या वा वायुः ग्रहीतव्यः इति यत् तत् पूरकस्य[5] स्वरूपम्।

सिद्धाद्यासनमास्थाय निश्चलगात्रो योगी रेचकपूरकव्यापारं न कुर्वन् वायुस्तम्भनभावं नियुञ्ज्यादिति यत् तत् कुम्भ[6]कमिति। कुम्भकप्राणायामकाले अन्धबधिरवत् रूपशब्दादिविषयशून्यवत् भूयादिति। क्षुरिकोपनिषदि उक्तम्–

**कूर्मोऽङ्गानीव संहृत्य मनो हृदि निरुध्य च।**
**मात्राद्वादशयोगेन प्रणवेन शनैः शनैः।।**[7]

---

1. ध्यानबिंदूपनिषद्, पृ. 197
2. अमृतनादोपनिषद्, पृ. 14
3. अमृतनादोपनिषद् श्लो. ।।10।।
4. उत्क्षिप्य वायुमाकाशे शून्यं कृत्वा निरात्मकम्। शून्यभावे नियुञ्जीयाद्रेचकस्येति लक्षणम्।।111।। (अमृत.वी.पृ.16)
5. वक्त्रेणोत्पलनालेन तोयमाकर्षयेन्नरः। एवं वायुर्गृहीतव्यः पूरकस्येति लक्षणम्।। 12।। पृ. 16
6. नोच्छ्वसेन्न च निश्वासेन्नैव गात्राणि चात्रयेत्। एवं भावं नियुञ्जीयात् कुम्भकस्येति लक्षणम्।।13।। अमृतनादोपनिषद्, पृ. 16
7. क्षुरिकोपनिषदि का. ।।31।।

**पूरयेत् सर्वमात्मानं सर्वद्वारं निरुध्य च।**
**उरोमुखकटिग्रीवं किञ्चिद्हृदयमुन्नतम्।।**[1]

**प्राणान् संधारयेत् तस्मिन् नासाभ्यन्तरचारिणः।**
**भूत्वा तत्रायतप्राणः शनैरुच्छ्वासमुच्छ्वसेत्।।**[2]

सर्वं जगदिदं मिथ्या वर्तते इति प्रतीतिरेव प्राणसंयमः इति त्रिशिखब्राह्मणोपनिषदि उक्तमिति।[3] यमाद्यङ्गत्रयविशिष्टः योगी नाडीशुद्धिपूर्वकं प्राणायामं कुर्यादिति त्रिशिखब्राह्मणोपनिषदः तात्पर्यम्। प्राणायामकाले सर्वप्रथमं शरीरगतदुष्टवायुरेचनं तदनन्तरं पूरणं तदनन्तरं कुम्भकेन वायोः शोधनं पुनः निःशेषतो रेचनम्, एवं चतुर्भिः पर्यायैः वायोः क्लेशनम् उपक्रमप्राणायामः उदीर्यते। नाडीशोधक-प्राणायामस्यापि वर्णनमत्रैवोपलभ्यते। इडया आपूर्य कुम्भित्वा पिङ्गलया रेचनम्, व्युत्क्रमस्तु पिङ्गलया आपूर्य कुम्भयित्वा इडया रेचनम्। एवमहरहः चतुर्वारं दिनैकमात्रावृद्धिपूर्वकम् अशीतिप्राणायाममभ्यसेत्।[4] प्राणायामस्य प्रस्वेदजननमधमं फलम्। शरीरस्य कम्पनं मध्यमं फलं शरीरस्योत्थानमुत्तमं फलमस्ति। रेचकं पूरकमुक्त्वा त्रिषु कालेषु कुम्भीकरणं य करोति योगी तस्य वाञ्छितार्थसिद्धिर्भवति इति। नाभिकन्दे, नासाग्रे, पादाङ्ग.ष्ठे च यः यत्नवान् मनसा प्राणान् धारयेत् स च योगी जनो वा सर्वरोगैः विनिर्मुक्तो भवति। दर्शनोपनिषदि अपि रेचकपूरककुम्भकभेदेन प्राणायामस्य त्रैविध्यं निरूपितमिति। प्राणायामस्य विधिं निरूपयन् आह–

**इडया वायुमाकृष्य पूरयित्वोदरस्थितम्।**
**शनैः षोडशभिर्मात्रैरकारं तत्र संस्मरेत्।।**

**पूरितं धारयेत् पश्चाच्चतुःषष्ट्या तु मात्रया।**
**उकारभूतिमत्रापि संस्मरन् प्रणवं जपेत्।।**

**यावद् वा शक्यते तावद् धारयेज्जपतत्परः।**
**पूरितं रेचयेत् पश्चान्मकारेणानिलं बुधः।।**

**शनैः पिङ्गलया तत्र द्वात्रिंशन्मात्रया पुनः।**
**प्राणायामो भवेदेष ततश्चैवं समभ्यसेत्।**

**पुनः पिङ्गलयापूर्य मात्रैः षोडशभिस्तथा।**
**अकारमूर्तिमत्रापि स्मरेदेकाग्रमानसः।।**

**धारयेत् पूरितं विद्वान् प्रणवं संजपन् वशी।**
**उकारमूर्तिं स ध्यायन् चतुःषष्ठ्या तु मात्रया।।**

1. क्षुरिकोपनिषदि का. ।।4।।
2. क्षुरिकोपनिषदि का. ।।5।।
3. त्रिशिखब्राह्मणोपनिषदि–पृ. 128 जगत् सर्वमिदं मिथ्याप्रतीतिः।
4. त्रिशिखब्राह्मणोपनिषदि–पृ. 140 प्राणसंयमः।

**मकारं तु स्मरन् पश्चाद् रेचयेदिडयानिलम्।।**
**एवमेव पुनः कुर्यादिडयापूर्य बुद्धिमान्।।**[1]

प्राणायामेन चित्तं तु शुद्धं भवति, चित्ते शुद्धे शुचिः साक्षात् प्रत्यग्ज्योतिः व्यवस्थितः, प्राणश्चित्तेन संयुक्तः परमात्मनि तिष्ठति।[2] प्राणसंयमनेनैव ज्ञानान्मुक्तिः जायते। पूरकस्य देवता ब्रह्मा, कुम्भकस्य देवता विष्णुः, अथ च रेचकस्य देवता रुद्रश्च भवति इत्युक्तमिति।[3] प्राणायामस्य प्रेरकः आचार्यो भवति। आचार्यस्य स्वरूपं प्रतिपादयन् आह–

**चोदको बोधकश्चैव मोक्षदश्च परः स्मृतः।**
**इत्येषा त्रिविधो ज्ञेय आचार्यस्तु महीतले।।**
**चोदको दर्शयेन्मार्गं बोधकः स्थानमादिशेत्।।**[4]
**मोक्षदस्तु परं तत्त्वं यज्ज्ञात्वामृतमश्नुते।**

कुम्भकप्राणायामस्य चतुर्विधो भेदः योगकुडल्युपनिषदि प्रतिपादितम् विद्यते इति। सूर्यकुम्भक-उज्जायीकुम्भक-शीतलीकुम्भक-भस्त्रकुम्भकभेदेन। निर्जने पवित्रे धनुः प्रमाणपर्यन्ते शीताग्निजलवर्जिते शर्करादिविवर्जिते देशे पवित्रोच्चनीचरहिते सुखदे पद्मासने ॐशब्दस्योच्चारणं कुर्वन् बहिष्ठं पवनं शनैः दक्षनाड्या समाकृष्य यथेष्टं वायुं पूरयेद् इडया रेचयेत्, कपालशोधने पवनं शनैःशनैः रेचयेत्। चतुष्कं वातदोषं, कृमिदोषं च प्राणायामोऽयं ध्वंसयति।

मुखं संयम्य पवनं शनैः नाडीभ्यामाकृष्य हृदयावधिकण्ठात् सस्वनं कुर्यात् तदनन्तरं कुम्भयेत् इडया प्राणं रेचयेदिति स च उज्जायी कुम्भकः। अस्य फलं भोगकुण्डल्युपनिषदि उक्तम्।

**शीर्षोदितानलहरं गलश्लेष्महरं परम्।**
**सर्वरोगहरं पुण्यं देहानलविवर्धनम्।।**
**नाडीजलोदरं धातुगतदोषविनाशनम्।।**
**गच्छतस्तिष्ठतः कार्यमुज्जाय्याख्यं तु कुम्भकम्।।**[5]

जिह्वया वायुं स्वीकृत्य कुम्भकानन्तरं शनैः शनैः घ्राणरन्ध्राभ्यां रेचयेत्। क्षयं, पित्तं, ज्वरं गुल्मप्लीहादिकान् दोषान् च शीतलीकुम्भकोऽयं नश्यति।[6]

पद्मासनं बद्ध्वा समग्रीवोदरः मुखं संयम्य यत्नेन प्राणं घ्राणेन रोचयेत्। यथा लगति कण्ठात्तु सस्वनं कपाले तदनन्तरं किञ्चिद्हृत्पद्मावधि मारुतं वेगेन पूरयेत् पुनः विरेचयेत् पूरयेच्च पुनः पुनः

1. दर्शनोपनिषदि षष्ठखण्डः श्लोक ।।3-9।।
2. ध्यानविन्दूपनिषदि, पृ. 191
3. दर्शनोपनिषद्, पृ. 17
4. ब्रह्मविद्योपनिषद्, पृ. 259
5. योगकुण्डल्युपनिषद्, 27-29
6. योगकुण्डल्युपनिषद्, ।।30-31।।

यथा लौहकारः भस्त्रं वेगेन चालयति तथैव विरेचयेत् पूरयेत् च। भस्त्रकुम्भकोऽयं कण्ठोत्थितानलस्य हरणं, शरीराग्नेः सम्वर्द्धनञ्च करोति। कुण्डल्याः ज्ञानञ्च कारयति, ब्रह्मनाडीमुखान्तस्थकफाद्यर्गलास्य नाशञ्च करोत्ययं भस्त्रकुम्भकप्राणायामः।[1] प्राणगतिनिरोधनमेव प्राणायामः इति योगचूडामण्युपनिषदि उक्तम्। इडापिङ्गलामार्गमाश्रित्य बहिः षड्विंशत्यङ्गुलपर्यन्तं प्राणं प्रसरति, तद्गतिकुण्ठनाय प्राणायामो विधीयते। पद्मासनं धृत्वा योगी चन्द्रेण प्राणं पूरयेत् सूर्येण रेचयेत्। कार्तिकपूर्णिमायां यथा चन्द्रः दृश्यते तस्य बिम्बं प्राणायामे मनसि धारयेत्। प्राणवायुम् इडया धृत्वा भूयः तद्विपरीतं रेचयेत्। यदा पिङ्गलया वायुं धारयेत् तदा वामनासिकया त्यजेदिति। तस्मिन् काले चन्द्रस्य वा सूर्यस्य ध्यानं कुर्यात्।[2] अनया रीत्या द्विमासानन्तरं नाडीशोधनं भवति। कथं प्राणायामः सम्पादनीय इत्यत्र योगतत्त्वोपनिषदि प्रतिपादितं विद्यते यत् ऋजुकायः प्राञ्जलिश्च स्वेष्टदेवतां नमस्कृत्य तदनन्तरं दक्षिणहस्तस्य अङ्ग.ष्ठेनैव पिङ्गलां नाडीं निरुध्य इडया शनैः शनैः वायुं पूरयेत्। शक्त्यनुसारं कुम्भकं कुर्यात् तदनन्तरं शनैः शनैः पिङ्गलया पुनः त्यजेदिति। पुनः पिङ्गलया उदरं शनैः शनैः पूरयेत्। तदनन्तरं पूरयित्वा इडया शनैः शनैः रेचयेत्।

नियमपूर्वकः प्राणायामस्य विधिः योगतत्त्वोपनिषदि अधोलिखितरूपेण विद्यते–

**जानुप्रदक्षिणीकृत्य न द्रुतं न बिलम्बितम्।**
**अङ्गुलिस्फोटनं कुर्यात् सा मात्रा परिगीयते॥**

**इडया वायुमापूर्य शनैः षोडशमात्रया।**
**कुम्भयेत् पिङ्गलानाड्या द्वात्रिंशन्मात्रया पुनः।**
**पुनः पिङ्गलयापूर्य पूर्ववत् सुसमाहितः॥**

**प्रातर्माध्यन्दिने सायमर्धरात्रे च कुम्भकान्।**
**शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत्॥**[3]

योगशिखोपनिषदि अपि कुम्भकस्य चातुर्विध्यं निरूपितमिति। सूर्यभेदकुम्भक उज्जायीकुम्भकः शीतलीकुम्भकः, भस्त्रिकाकुम्भकश्च। सूर्यनाड्या वायुं समाकृष्य विधिवत् कुम्भकं कृत्वा शीतरश्मिना रेचयेत्। उदरस्य रोगान् क्रिमिदोषञ्च निहन्ति इति सूर्यभेदकुम्भकः[4] इति। नाडीभ्यां वायुं स्वीकृत्य कुण्डल्याः समीपे क्षिपेत्, धारयेदुदरे इडया नाड्या, पश्चाद् रेचयेत्। अस्यापि फलं पूर्ववदेव बोध्यमिति। योगशिखोपनिषदि भस्त्रिका प्राणायामस्य यथा स्वरूपमुपलभ्यते तथैव प्रायोगिकरूपेण बाबारामदेवः योगं करोति। शाण्डिल्योपनिषदि प्राणायाममवलम्ब्य किञ्चिदन्यापेक्षया वैशिष्ट्यं वर्तत इति। सुषुम्नामलशोधनार्थमपि प्राणायामः क्रियते। तस्य नियमस्य स्वरूपमित्थं विद्यत इति। आसनारूढः योगी पद्मासनमाश्रित्य, चन्द्रेण वायुमापूर्य यथाशक्तिकुम्भकं कृत्वा, सूर्येण रेचयित्वा, पुनः पुनः सूर्येण

1. योगकुण्डल्युपनिषद् का ॥32-39॥
2. योगचूडामण्युपनिषत्, श्लोका. 95-99
3. योगतत्त्वोपनिषत् श्लोक 40-43
4. योगशिखोपनिषत् प्रथमाध्याय श्लोक- 88-94

आपूर्य चन्द्रेण विरेच्य प्राणायामं कुर्यात्। अहरहर: कर्त्तव्यप्राणायामसंख्या का इति जिज्ञासायामुच्यते–

**प्रातर्मध्यंदिने सायमर्धरात्रे तु कुम्भकान्।**
**शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत्।।**[1]

सस्वनं हृदयादिकण्ठपर्यन्तं नासाभ्यां शनै: वायुं स्वीकृत्य शक्त्यनुसारं कुम्भकं कृत्वा इडया विरेच्य गच्छन् तिष्ठन् कुर्यात्। वक्त्रेण सीत्कारपूर्वकं पवनं गृहीत्वा यथाशक्ति कुम्भयित्वा नासाभ्यां[2] रेचयेत्। तत: क्षुत्तृष्णालस्यनिद्रा: न भवन्ति अयमेव प्राणायाम: सीत्कारप्राणायाम: इति। रसनया वायुं स्वीकृत्य शक्त्यनुसारं कुम्भकं कृत्वा नासाभ्यां रेचयेत्। तेन गुल्मप्लीहज्वरपित्तक्षुधादिदोषा: नश्यन्ति। प्राणायामोऽयं शीतलीप्राणायाम:।[3] कुम्भकप्राणायाम: द्विविधो भवतीति शाण्डिल्योपनिषदि उक्तम्।

सहित: केवलश्चेति भेदात् कुम्भक: द्विविधो भवति। रेचकपूरकयुक्त: सहित: प्राणायाम:। रेचकपूरकरहित: केवल इति। यदा पर्यन्तं केवलकुम्भकस्य सिद्धिर्न भवति, तावत्पर्यन्तं सहितमभ्यसेत्। केवलकुम्भकस्य यदा सिद्धिर्जायते तदा त्रिषु लोकेषु किमपि दुर्लभं न भवति। केवलकुम्भकप्राणायामेन कुण्डलिनीज्ञानं जायत इति। कुम्भकाभ्यासेन शरीरे कृशत्वं जायते निर्मललोचन: अभिव्यक्तनाद: रोगरहितश्च जन:[4] जायते। लौकिकजीवने प्राणायामस्य महत्त्वं सर्वत्रैव दरीदृश्यत इति।

---

1. शाण्डिल्योपनिषद् प्रथमाध्याय:, श्लोक–2
2. शाण्डिल्योपनिषद् प्रथमाध्याय:, पृ.सं. 534
3. शाण्डिल्योपनिषद् पृ.सं. 534
4. शाण्डिल्योपनिषद् पृ.सं. 535

# सांख्यसिद्धान्ते सत्कार्यवादः

**डॉ. विष्णुपदमहापात्रः**

समेषां भारतीयवैदिकावैदिकदार्शनिकानां परमं लक्ष्यभूतं तत्त्वं भवति आत्मसाक्षात्कारः। आत्मसाक्षात्कारमन्तरा परमपुरुषार्थस्य निःश्रेयसोऽवाप्तिरेव नैव सम्भवतीत्यतः समे दार्शनिका आत्मसाक्षात्काराय सततं प्रयत्नशीलाः भवन्ति। आत्मसाक्षात्कारस्य साधनं भवति श्रवणं मननं निदिध्यासनञ्चेति, निगदति। श्रुतिः-''**आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः**''[1] इति। आत्मसाक्षात्कारे श्रवणमनननिदिध्यासनानि तत्त्वज्ञानजनकानि भवन्ति। तथा च श्रूयते-

**श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यचोपपत्तिभिः।**
**मत्त्वा च सततं ध्येय एते दर्शनहेतवः॥**

एतेन ज्ञायते यद् आत्मसाक्षात्कारे यदि एतानि कारणानि भवन्ति तर्हि कार्यमात्रं प्रति कारणमवश्यं स्वीकर्तव्यमिति धिया लोके कारणतः कार्यस्योत्पत्तिरिति सर्वेषां सिद्धान्तः। कार्यकारणयोरविनाभावदर्शनात् ''तत् सत्त्वे तत्सत्त्वम्, तदभावे तदभावः''इति अन्वयव्यतिरेकसहचारदर्शनाच्च कारणमन्तरा कार्यस्योत्पत्तिः भवितुन्नर्हति; इति निचप्रचं वक्तुं शक्यते। अन्यथासिद्धिशून्यत्वे सति नियतपूर्ववर्तित्वं, कार्याभावप्रयोजकीभूतभावप्रतियोगित्वं वा, प्रागभावप्रतियोगित्वं ध्वंसाभावप्रतियोगित्वं वेति कारणकार्ययोः सामान्यलक्षणं शास्त्रज्ञैः प्रतिपादितम्। कारणेनैव कार्यस्योत्पत्तिरित्यत्र विशयाभावेऽपि कारणे उत्पत्तेः प्राक् कार्यस्य विद्यमानत्वमस्ति न वेति इत्यत्र कार्यकारणभावे विद्यते वस्तुतः चतुर्धा विमृश्यते।

तत्र ''**असतः सज्जायते**'' इति बौद्धानां प्रथमो विमर्शः। ''**एकस्य सतो विवर्त कार्यजातं न वस्तु सत्**'' इति वेदान्तिनां द्वितीयो विमर्शः। ''**सतोऽसज्जायते**'' इति न्यायज्ञानां तृतीयो विमर्शः। ''**सतः सज्जायते**'' इति सांख्यानां सिद्धान्तः।

''**असतः सज्जायते**'' इति यत् सौगताः प्रतिपादयन्ति। तेषामयमेवाभिप्रायः विनष्टाद् बीजाद् अङ्कुर उत्पद्यते। अर्थात् कारणाभावात् भावस्य कार्यस्योत्पत्तिर्भवति। यथा मृत्सलिलसंयोगाद् बीजे नष्टे सत्येवाङ्कुर उत्पद्यते, एतेन स्पष्टं भवति अभावस्यैव कारणत्वम्। उक्तं च सूत्रकारेण महर्षिणा गौतमेन-''**अभावाद् भावोत्पत्तिः- नानुपमृद्य प्रादुर्भावात्**''[2] इति। बीजादीनां विनाशं विना कार्योत्पत्तेरसंभवात्। अव्यवहितपूर्ववर्त्तिन एव कारणमभीष्टम्, अङ्कुरादिकार्यादव्यवहितपूर्ववर्त्तित्वं च बीजाद्यभावस्यैव सम्भवति न बीजादेः इत्यभावस्यैव कारणत्वं सिद्ध्यति। एवञ्च घटादिपक्षेऽपि

1. बृहदारण्यकोपनिषत्, 2/5
2. न्यायसूत्रम्, 4/1/14

मृत्पिण्डादेः स्वरूपविनाशो भवत्येवेति अभावस्य कारणत्वं स्पष्टमेव। अत इमे सौगताः असत्कारणवादिन इति प्रसिद्धाः सन्ति। अनुमानेनापि अभावस्य कारणत्वं व्यवस्थापयितुं शक्यते-**''सर्वे कार्यरूपभावाः अभावकारणकाः कार्यत्वात् बीजनाशोत्तरोत्पन्नाङ्कुरादिवत्''** इति सौगतानां सिद्धान्तः।

तत्र सौगतैः अभावाद् भावोत्पत्तिरिति सद्भाषितं तत्सर्वथा अरुचिकरमेव। यतः असतः सदुत्पत्तेरसंभवात्। तथा च सूत्रकारः महर्षिगौतमः **''न विनष्टेभ्योऽनिष्पत्तेः।''**[1] अर्थाद् अभावाद् भावस्योत्पत्तिः कथमपि भवितुन्नर्हति। विनष्टेभ्यो बीजादिभ्यः कारणेभ्योऽङ्कुरादिकार्याणामुत्पत्तेरभावात्। यदि विनष्टादेव बीजाङ्कुर उत्पद्येत तदा चूर्णीकृतादप्युत्पद्येत, विनाशस्याविशेषाद् इति। तथाहि भाष्यकारः वात्स्यायनः-**''न विनष्टाद् बीजादङ्कुर उत्पद्यते इति तस्मान्नऽभावाद् भावोत्पत्तिरिति।''**[2] एवञ्च न हि बन्ध्यापुत्रो भवितुमर्हति। न वा शशविषाणं कारणतया दृष्टिपथमवतरति। अतः बौद्धमतं सर्वथा अयुक्तिकरमिति भाति।

वेदान्तिनस्तु **''सतो विवर्तः कार्यजातं न वस्तु सत्''** इति विवर्तवादं समाश्रयन्ति। यतः तेषां मते **''ब्रता सत्यं जगन्मिथ्या''** इति उक्तिः प्रसिद्धा विद्यते। ब्रह्म एव जगतोऽभिन्ननिमित्तोपादानम्, लूतावद् भवति। ब्रह्मणः विवर्त जगद्भवतीति, विवर्तो नाम उपादानविषमसत्ताककार्यापत्तिरिति अप्रच्युतपूर्वरूपस्य असत्यनानाऽऽकारावभासो विवर्त इति। शास्त्रज्ञैः भाषितं यत्-

**सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः।**
**अतत्त्वतोऽन्यथा प्रथा विवर्त इत्युदीरितः॥**[3]

वस्तुतः विवर्तवादो मायातत्त्वाभ्युपगन्तृणां शङ्कराचार्याणाम्। तेषां नये कारणमेव कार्यस्वरूपेण भासते इति कारणस्यैव सत्यत्वं न कार्यस्य सत्यत्वं विद्यते। यथा **''शुक्तौ इदं रजतम्''** इति ज्ञानान्तरमधिष्ठानभूतशुक्तिज्ञाते जाते बाधज्ञानेन पूर्वज्ञातं रजतं यथा निवर्तते, तद्वद् ब्रताज्ञाने जाते सति जगदादिभेदप्रपञ्चो निवर्तते। तथा चोक्तम्-

**ततो निरंश आनन्दे विवर्तो जगदिष्यताम्।**
**अवस्थान्तरभानं तु विवर्तो रज्जुसर्पवत्॥**

इति वैदान्तिकैः यद् विवर्तवादोऽभ्युपगतः तन्न समीचीनः, यतः असति बाधे प्रत्यक्षसिद्धपदार्थस्य मिथ्यात्वं भवितुं नार्हति। यत्र च बाधज्ञानं किञ्चिदन्यत् कारणं वा सम्भवति तत्रैव मिथ्यात्वस्य सिद्धिर्भवितुमर्हति नान्यथा। तथा च कपिलेनोक्तम्-**''जगत्सत्यत्वम् अदुष्टकारणजन्यत्वाद् बाधकाभावात्''**[4] इति। दुष्टकारणजन्यं ज्ञानं तावत् काचकामलादिदोषाद् पित्तादिदोषाद्वा पीतशंखज्ञानम्। बाधकं ज्ञानं च नेदं रजतमिति ज्ञानम्। न च इदं तथा प्रकृत्यादीनामदुष्टत्वात्। **''नेदं जगत्''** इति

---

1. न्यायसूत्रम्, 4/1/17
2. न्यायभाष्यम्, पृ.- 352 (प्रेत्यभावप्रकरणम्)
3. वेदान्तसारः, अपवादप्रकरणम्।
4. सांख्यसूत्रम्, 6/52

प्रतीत्यभावाद् बाधकाभावाच्च जगतो मिथ्यात्वमसम्भवीत्यतः वेदान्ताभिमतः विवर्तवादः न युक्त इति सांख्याः निगदन्ति।

एवञ्च कार्यकारणविषये भारतीयदर्शनशास्त्रे सत्कार्यासत्कार्यवादयोः चर्चा बहुधा श्रुयते। ये तु कार्योत्पत्तेः प्राक् कारणे कार्यस्य विद्यमानत्वमित्यामनन्ति ते सत्कार्यवादिनः सांख्याः। ये खलु कार्योत्पत्तेः प्राक् कारणे कार्यस्य अविद्यमानत्वं कार्यञ्च नवीनं जातमाविर्भावमूलकञ्च भवतीत्यामनन्ति ते असत्कार्यवादिनः नैयायिकाः भवन्तीति।

न्यायनये असदेव कार्यमुत्पद्यते। यथा पूर्वमसदेव तत्तद्घटादिकार्यजातं दण्डचक्रचीवरादि-सामग्रीसमवधानेन मृदादिकारणवशाद् भिन्नं सदुत्पद्यते। अर्थात् स्वोत्पत्तेः पूर्वं तत् कार्यं नासीदेव, पचात् कारणसामग्रीवशाद् उत्पद्यत इति कार्यकारणयोरन्यत्वं परमार्थतः सत्यं चति। ततच सतोऽसज्जायत इति नैयायिकमतम्।

अभिप्रायस्तु न्यायमते कारणतः कार्यं भिन्नपदार्थविशेषः। कारणे यदि कार्यस्य निहितत्वमभ्युपगम्यते तर्हि कार्यकारणयोस्तादात्म्यापत्तिः स्यात्, कार्यकारणयोः अभिन्नत्वे च पृथगुल्लेखस्य प्रयोजनमेव नास्ति। अनयोः कार्यकारणयोर्भिन्नत्वादनयोः पृथगभिधानम्। मृत्तिकातः घटस्योत्पद्यमानत्वेऽपि अनयोः मृत्तिकाघटयोः भिन्नपदार्थत्वात् मृत्तिकां मृत्तिकात्वेन घटं च घटत्वेन ज्ञातुं शक्यते। मृत्तिकादौ घटस्य घटे च मृत्तिकायाः लोकव्यवहाराभावादिति प्रथमकल्पः।

यदि च कार्यकारणयोरभिन्नत्वं कल्प्यते तर्हि उभयोः एकप्रयोजनत्वं स्यात्, तथा न दृश्यते, प्रत्युत प्रत्यक्षसिद्धमिदं यद् घटेऽस्मदादीनां प्रयोजनमुद्देश्यं वा साधयति। मृत्तिकादौ तथा व्यवहाराभावात् कारणतः कार्यस्योत्पत्तिदर्शनाच्चानयोः कार्यकारणयोः वैचित्र्यं सिद्धत्रतीति द्वितीयकल्पः।

यदि च कार्योत्पत्तेः प्राक् कार्यस्य कारणे विद्यमानत्वमित्यभ्युपेयते तर्हि कार्योत्पत्तेरेवावश्यकतैव नास्ति यतः उत्पत्तिशब्दस्यार्थो भवति यः पूर्वं नासीत् तस्याविर्भावः। उत्पत्तेः प्राक् कार्यस्य कारणे यदि विद्यमानता तर्हि तस्योत्पत्तिरिति वक्तुं नैव शक्यते। कार्योत्पत्तेः सर्वाभिमतत्वात् सर्वव्यवहारयोग्यत्वाच्च सत्कार्यवादः नाभ्युपेय इति तृतीयकल्पः।

कार्यकारणयोः सम्पर्कविशेषः कचन सम्बन्धोऽपि प्रसिद्ध इति दृश्यते। भिन्नयोः पदार्थयोः एव सम्बन्धः सर्वाभिमतः। यदि कार्यकारणयोः अभिन्नत्वं तर्हि अनयोः कार्यकारणयोः कचन सम्बन्धोऽस्ति इति वक्तुं नैव शक्यते इति तुरीयकल्पः।

कारणं कार्यञ्च घटच तथा एकपदार्थविशेषः न भवति तथैव यदि मृत्तिकाघटयोः उपादानम् अभिन्नं स्यात् तर्हि अनयोः स्वरूपमपि अभिन्नमैक्यं च स्यात्। घटोत्पत्तेः प्राक् कारणे मृत्तिकायां घटस्याविद्यमानत्वमिति प्रत्यक्षसिद्धमेवेति पञ्चमकल्पः।

नैयायिकास्तु इत्थमपि प्रतिपादयन्ति कार्योत्पत्तेः प्राक् कारणे यदि कार्यस्य विद्यमानता भवेत् तर्हि निमित्तकारणस्यापि अपेक्षा न स्यात्, परन्तु निमित्तकारणस्य सर्वाभिमतसिद्धत्वात् तदपलपितुं को वा समर्थः। निमित्तकारणमन्तरा यदि कार्यस्योत्पत्तिरभ्युपेयते तर्हि घटपटादिनिमित्तकारणस्य कुम्भकारस्य

तन्तुवायस्य वा अपेक्षा न स्यात्, मृत्तिकायां घटस्य विद्यमानता नास्तीति कुम्भकारस्य निमित्तकारणत्वेन अस्ति सापेक्षा इति षष्ठकल्पः।

एतेन प्रसिद्धं भवति यत् कार्यं कारणतः भिन्नः पदार्थः, कारणतः जायमानं कार्यं सर्वथा नूतनमेवेति नैयायिकाः असत्कार्यवादं समर्थयन्ति व्यवस्थापयन्ति च।

नैयायिकैः यो हि असत्कार्यवादः व्यवस्थापितः तन्नानुमतः इति सांख्याः प्रवदन्ति। तथाहि असतः कार्यस्य कारणव्यापारसहस्रैरपि कर्तुमशक्यत्वात्। न हि शिल्पिसहस्रेणापि नीलं पीतं कर्तुं शक्यते। कारणेऽसतः कार्यस्य कार्यसत्तया सह सम्बन्धासंभवाच्च। न हि अविद्यमानं शशशृङ्गं कदापि शशे शृङ्गरूपकार्यसत्तां भजते। उक्तं च महर्षिणा कपिलेन **''नासदुत्पादो नृवृग्वत्''**[1] इति। अर्थात् **''नरशृङ्गः तुल्यस्यासत उत्पादोऽपि न सम्भवतीति।''**[2]

सांख्यनये सतः सज्जायते यतः ''उत्पादनियमात्''इति। अर्थात् मृत्तिकात एव घट उत्पद्यते, तन्तुषु पट उत्पद्यते इत्येवं कार्याणामुपादानकारणं प्रति यो नियमः विद्यते, तत्र सम्भवति। उत्पत्तेः प्राक् कारणे कार्यसत्तायां हि न कोऽपि विशेषोऽस्ति, येन कञ्चिदेवासन्तं जनयेत्, नेतरमिति विशेषाङ्गीकारे च भावत्वापत्तेर्समसत्तया, स एव च विशेषोऽस्माभिः कार्यस्यानागतावस्थेत्युच्यत इति। एतेन हि न्यायवैशेषिकाः प्रागभावमेव कार्योत्पत्तिनियामकं कल्पयन्ति तदपि निरस्तम्। अभावकल्पनापेक्षया भावकल्पने लाघवात् भावानां दृष्टत्वादन्यानपेक्षत्वाच्च। ईश्वरकृष्णोऽपि सत्कार्यवादस्य स्थापनाय हेतुं प्रस्तौति कारिकामुखेन-

**असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्॥**[3]

अर्थात् असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात् शक्तस्य शक्यकरणात् कारणभावाच्चति पञ्चहेतुभिः सत्कार्यवादः साधितः सांख्यैः सूत्रकारैचापि सत्कार्यवादस्य स्थापनार्थं **''उपादाननियमात्''**[4], **''सर्वत्र सर्वदा सर्वासम्भवात्''**[5], **''शक्तस्य शक्यकरणात्''**[6], **''कारणभावाच्च''**[7] इति सूत्रचतुष्टयमुल्लिखितम्।

असदकरणादित्यस्य अयमेवाभिप्रायः असतः बन्ध्यापुत्रतुल्यस्य स्वोत्पत्तेः प्रागवर्तमानस्य अकरणात् उत्पत्त्यभावात्। अत्र च व्यतिरेकव्याप्तिविशिष्टो हेतुः अभ्युपेयः, तथा च यद् असद् भवति

---

1. सांख्यसूत्रम्, 1/114
2. सांख्यप्रवचनभाष्यम्, पृ.- 68
3. सांख्यकारिका-9
4. सांख्यसूत्रम्, 1/115
5. सांख्यसूत्रम्, 1/116
6. सांख्यसूत्रम्, 1/117
7. सांख्यसूत्रम्, 1/118

तत्र करणं भवति यथा बन्ध्यापुत्रः, कूर्मक्षीरादयः, यच्चोतपन्नं भवति तत्सद् भवति यथा घट-पटादयः। अनुमानाकारस्तु कार्यमुत्पत्तेः प्रागपि सद् असदकरणादिति।

उपादानग्रहणाद् अर्थाद् उपादानैः कारणैः सह कार्यस्य ग्रहणात् सम्बन्धाच्च कार्यस्य सत्त्वमेव। सम्बन्धच कार्यस्य सत एव भवितुं शक्नोति। घटात्मककार्यार्थी पुरुषस्तस्योपादानभूतमृत्तिकाया ग्रहणं करोति, यथा वा दधिरूपकार्यार्थी पुरुषः उपादानभूतस्य क्षीरस्यैव ग्रहणं करोति, नान्यस्य अत उपादानग्रहणादिपि हेतोरुत्पत्तेः प्राक्कारणे कार्यमस्तीति प्रसिद्ध्यति। अनुमानन्तावत् कार्यं सत् उपादानग्रहणादिति।

सर्वेषां कार्याणां सर्वत्र सम्भवाभावात्, कस्यचित्कार्यस्य उत्पत्त्यर्थं किमपि कारणमुपादीयते, न तु सर्वस्योत्पत्तये सर्वमुपादीयते। उत्पत्तेः प्राक् कार्यस्यासत्त्वपक्षे नाऽयं नियमः सङ्गच्छते। घटोत्पत्तये मृत्तिकायाः ग्रहणं भवति न तन्तोः ग्रहणम्। यदि च उत्पत्तेः प्रागसदेव कार्यं भवेत्तर्हि कार्यासत्त्वस्य सर्वत्राविशेषात् तन्त्वादिभ्योऽपि घटः स्यात्, तथा नावलोक्यत इत्यतः न कार्यमसत् इति। यदि च सत्त्वपक्षमाश्रीयते तर्हि घटस्य मृत्तिकायामेव सत्त्वात् मृत्तिकात एव घटोत्पत्तिः सम्भवति न तन्त्वादिभ्य इति।

शक्तस्य शक्यकरणादिति हेतोः तात्पर्यं तु शक्तं कार्यजननयोग्यं कारणम् आश्रयो यस्याः सा, कार्यजननशक्तिमपि कारणे विद्यमानायावतीशक्तिर्भवति तावदेव कार्यं ततो प्रकटीभवति यथा सेटकपरिमितेभ्योः तिलेभ्यः पादसेटकं तिलमेव प्राप्तुं शक्यते यतस्तेषु तिलेषु ततोऽधिकं तैलन्न भवतीति शक्तमपि कारणं शक्यमेव कार्यं प्रसीतुम्प्रभवतीति–''**शक्तिभेद एव एतादृशो यतः किञ्चिदेव कार्यं जनयेत् न सर्वमिति चत् हन्त! भोः**''[1] इति। शक्तस्य शक्यकरणादिति हेतुः समीचीनः।

अन्तिमो हेतुर्भवति ''**कारणभावात्**'' इति। अर्थाद् अत्पत्तेः प्रागपि कार्यस्य कारणाभेदः श्रूयते, तस्माच्च सत्कार्यसिद्धज्ञा न असदुत्पाद इति। कार्यस्य असत्त्वीकारे सदसतोरभदानुपपत्तिः। उत्पत्तेः प्राक् कार्याणां कारणाभेदे च श्रुतिरेव प्रमाणम्। तथा च श्रुतिः–''**तद्धीदं तेंव्याकृतमासीत्**''[2], ''**सदेव सोम्येदमग्र आसीत्**''[3] ''**आत्म्यैवेदमग्र आसीद्**''[4] इति। कारणस्य सद्भावोऽस्तीति कार्यस्यापि सत्त्वमेवागीकर्त्तव्यम्।

अनया युक्त्या सांख्यदर्शने न्यायवैशेषिकाभिमतासत्कार्यवादस्य बौद्धाभिमताभावकारणतावादस्य वेदान्ताभिमतविवर्तवादस्य च निराकरणपूर्वकं सत्कार्यवादसिद्धान्तो कारणव्यापारात् प्रागपि कारणेऽव्यक्तं कार्यं सदिति साधयत्येवेतिशम्।

---

1. सांख्यतत्त्वकौमुदी, पृ.- 90
2. बृहदारण्यकोपनिषत्, 1/4/7
3. छान्दोग्योपनिषत्, 6/1/2
4. मैत्र्युपनिषत्, 305/2

# पापिनां चन्द्रलोकगमनाऽगमनयोर्ब्रह्ममीमांसासूत्रानुसारेण विचारः

**डॉ. सुमोदवर्धनः कौण्डिन्न्यायनः**

## 1. विषयप्रवेशः

संसारचक्ररूपे दुःखसागरे निमग्नानां मनुष्याणामुद्धाराय भारतवर्षे दर्शनशास्त्राणां प्रवृत्तिरभूदिति दर्शनशास्त्रस्य परिचयं लब्धवतां जनानां कृते नास्ति तिरोहितम्। भारतवर्षे विकसितेष्वनेकेषु दर्शनेषु मध्ये औपनिषद्दर्शनं (वेदान्तदर्शनं) सर्वदर्शनशिरोमणिभूतमित्यत्र बहूनां विदुषामनुसन्धातृणां च मतैक्यं दृश्यते। प्राच्यपरम्परायां वेदा अनादयोऽपौरुषेया धर्ममोक्षविषये परमप्रमाणभूताश्च स्वीक्रियन्त इत्युपनिषदोऽपि वेदभागरूपत्वात् परमप्रमाणभूता एवं मन्यन्ते। वेदानामन्तिमे भागे स्थिततत्वाद् वेदानां सारभूतत्वाद् वोपनिषद एव वेदान्तनाम्ना व्यवह्रियन्ते। अतो वेदान्तदर्शनं वैदिकदर्शनं वर्तते।

वेदान्तदर्शनं मुख्यरूपेणोपनिषत्स्वेव प्रतिपादितं वर्तते। पश्चाद्वर्तिभिराचार्यैः उपनिषदामेव तात्पर्यमादायाऽनेके प्रकरणग्रन्थाः, व्याख्याग्रन्थाः, परमतखण्डनपरा ग्रन्थाश्च रचिता दृश्यन्ते। उत्तमाधिकारिणां कृते तूपनिषद एवं वेदान्तदर्शनज्ञानाय पर्याप्ता भवन्ति। परं मन्दाधिकारिणां कृत उपनिषदां तात्पर्यज्ञानं कठिनं भवतीति लोकोपकाराय द्वापरयुगस्यान्तिमे भागे कृष्णद्वैपायनाऽपरनामको वेदव्यासो बादरायणमुनिः ब्रह्मसूत्रनामकं ग्रन्थं प्रणिनाय। परं मन्दानां कृते ब्रह्मसूत्रस्यार्थस्य ज्ञानमपि कठिनं जातमिति विभिन्नैराचार्यैः तस्य भाष्यं व्याख्यानं वा विरचितम्। तेषु मध्ये शङ्करभगवत्पादविरचितं भाष्यमिदानीमुपलभ्यमानेषु भाष्येषु मध्ये सर्वप्राचीनं बहुमान्यं च वर्तते। अद्वैतवेदान्तदर्शने तु शाङ्करभाष्यं सर्वमान्यमेव वर्तते।

अस्मिन् निबन्धे ब्रह्मसूत्रस्य **'संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्'**[1] इति सूत्रस्य, शाङ्करभाष्यस्य, अन्येषां भाष्याणां व्याख्यानां वृत्तीनां च समीक्षणं प्रस्तूयते। अस्मिन् सूत्रे विचार्यो विप्रतिपत्तिभूतश्च विषयोऽस्ति–पापकर्मफलभोगार्थं नरके प्राप्तानां प्राणिनां चन्द्रलोके प्राप्तिरस्ति न वेति?

## 2. अनिष्टादिकान्यधिकरणार्थविचारः

**'ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति'**[2] इत्यास्याः श्रुतेस्तात्पर्यनिर्धारणाय ब्रह्मसूत्रस्य तृतीयेऽध्याये प्रथमे पादेऽनिष्टादिकान्यधिकरणस्य रचना कृता वर्तते।

1. ब्र.सू. 3/1/13
2. कौषी, 1/2

अत्र श्रुतेः सामान्योऽर्थः इष्टादिकारिणोऽनिष्टादिकारिणश्च सर्वेऽपि चन्द्रलोकमेव गच्छन्तीति भवति। किन्तु सर्वेषां चन्द्रलोकमगने इष्टाऽनिष्टकारिणां भेद एव न स्यात्, शास्त्रोक्तस्य नरकस्य चाऽऽनर्थक्यं स्यादिति च शङ्कोत्पद्यते। एतस्याः शङ्काया निवारणार्थमिदधिकरणं विरचितम्। अत्र **'अनिष्टादिकारिणामपि च श्रुतम्'**[1] इति सूत्रेणाऽत्र पूर्वपक्षः स्थापितोऽस्ति-सर्वेऽपि चन्द्रमसमेव गच्छन्तीति। उत्तरपक्षरूपेण च **'संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्'**[2] इति सूत्रमागतं वर्तते। अत्र तुशब्दः पूर्वपक्षं निवारयति, न हि सर्वेऽपि इतो मर्त्यलोकाच् चन्द्रमसं गच्छन्ति। इतरेषाम् अनिष्टादिकारिणाम्, संयमने नरके, अनुभूय दुःखमनुभूय, आरोहावरोहौ चन्द्रलोके आरोहस्ततो मर्त्यलोकेऽवरोहश्च भवति कुतः? तद्गतिदर्शनात् नरकगतेः श्रुतिस्मृतिषु वर्णितत्वादित्यर्थः। एष एवाऽर्थः सूत्रात् सामान्यतो बुध्यते। परं शाङ्करभाष्यादिषु विविधप्रकारेणाऽस्य सूत्रस्य व्याख्यानादस्य सूत्रस्य कोऽर्थोऽभिप्रेतः सूत्रकारस्येति भृशं विचारणीयं दृश्यते। अस्य सूत्रस्य व्याख्याने पक्षत्रैविध्यं दृश्यते–**1.** अनिष्टादिकारिणः केऽपि चन्द्रमसं न गच्छन्ति, **2.** अनिष्टादिकारिषु मध्ये नरकभोगा-नन्तरं ये सुकृतभोगार्थं चन्द्रलोकं गच्छन्ति त एव चन्द्रमसं गच्छन्ति, इतरेऽनिष्टादिकारिणः चन्द्रमसं न गच्छन्ति, **3.** सर्वेऽप्यनिष्टादिकारिणः संयमने कर्मफलं भुक्त्वा मर्त्यलोकप्राप्त्यर्थं चन्द्रलोकं प्राप्नुवन्ति इति च।

उक्तानां त्रयाणामेव पक्षाणामुपस्थापनपूर्वकमौचित्यपूर्णः पक्ष क इति चाऽत्र संक्षेपेण विविच्यते।

### 2.1. अनिष्टादिकारिणः चन्द्रमसं न गच्छन्तीति पक्षः

शाङ्करभाष्ये अनिष्टादिकारिणः चन्द्रमसं न गच्छन्तीति पक्षः स्वीकृतो वर्तते–**'... नैतदस्ति सर्वे चन्द्रमसं गच्छन्तीति। एतत् कस्मात्। यतो भोगायैव चन्द्रारोहणं न निष्प्रयोजनम्। नाऽपि प्रत्यवरोहायैव। ...भोगश्चानिष्टादिकारिणां चन्द्रमसि नास्तीत्युक्तम्। तस्मादिष्टादिकारिण एव चन्द्रमसमारोहन्ति नेतरे'**[3] इति।

अनेकैर्विद्वद्भिः कृतेषु भाष्येषु, व्याख्यानेषु, अनेकासु वृत्तिषु च शाङ्करभाष्येण स्वीकृत एष एव पक्षोऽवलम्बितो दृश्यते। उक्तसूत्रस्य व्याख्याने विभिन्नैर्विद्वद्भिः संयमने गतानां चन्द्रलोकगमनं नास्तीति पक्षमवलम्ब्योपस्थापितानि वचनान्यत्र संक्षेपेण प्रस्तूयन्ते–

**संयमनमनुभूय केषाञ्चिदारोहः केषाञ्चिदवरोहः। तुशब्दोऽवधारणे सर्वे वा एते (ऽ?)शुभकृतः संयमनं प्रपतन्ति। तत्र ह ये परद्विषो गुरुद्विषः श्रुतिद्विषस्तदवमन्तारः शठा मूर्खा इति ते वै ततोऽवरुह्य तमसि प्रपतन्ति नैव ते उत्तिष्ठन्तेऽपि कर्हिचित् ये ध्रुवा एतदित्याहुः। अर्थ येऽन्ये ब्रह्मद्विषस्तेनाः सुरापास्ते वै तदनुभूयेमं लोकमनुव्रजन्तीति कौठरव्यश्रुतेः।**[4]

1. ब्र.सू. 3/1/12
2. ब्र.सू. 3/1/13
3. ब्र.सू. 3/1/13, शाङ्करभाष्ये, पृ. 336
4. इत्यानन्दतीर्थ (मध्य) विरचिते पूर्वप्रज्ञदर्शननामके भाष्ये, पृ. 108

**शुभेन कर्मणा स्वर्गं निरयं च विकर्मणा।**[1]

**न केवलमिष्टादिकारिणामेव गतागतादिक्लेशः। किन्नाम, इष्टाद्यकारिणां तद्विरुद्धब्राह्मणहननादिकारिणामपि।** 'तद्य हइ शुभकृतो ये चाशुभकृतः ते अशुभमनुभूयावर्तन्ते (पाठान्तरम्–शुभमनुभूयावर्तन्ते अशुभकृतः संयमने पतन्ति)। पुनः कर्म कुर्वन्ति, पुनः गच्छन्ति। पुनरागच्छन्ती' **ति श्रुतेः।** 'सर्वे वा एते अशुभकृतः संयमने प्रपतन्ती' **ति श्रुत्यन्तराच्च।** 'गच्छन्ति पापनिः सर्वे नरकं नात्र संशयः' **इति स्मृतेश्चेति सिद्धान्त कृतः।**[2] इति

**भोगार्थमेव हि स्वर्गगमनम्। न पञ्चमाहुतिलाभार्थम्। पञ्चमाहुतेर्व्यभिचारित्वात्। ... तस्मान्न पापिनां स्वर्गे गतिः।**[3]

**तुशब्दोऽनिष्टादिकारिणां चन्द्रगतिं व्यावर्तयति। संयमने याम्ये पुरे इतरेषामनिष्टादिकारिणां दुःखानुभवार्थमारोहो दुःखमनुभूयाऽवरोहः। तावेवाऽऽरोहाऽवरोहौ।**[4]

**अनिष्टादिकारिणः चन्द्रमसं न गच्छन्ति, तेषां तत्र भोगाभावात्।**[5]

**नेतरेषां चन्द्रगमनम्। भोगार्थं हि तत्र गमनम्। इष्टादिकारिणामेव तत्र भोगो नाऽन्येषाम्।**[6]

**इतरेषां चन्द्रलोके गमनं नास्ति। भोगायैव हि तत्र गमनं न निष्प्रयोजनम्। इष्टादिकारिणामेव हि तत्र भोगो नानिष्टादिकारिणाम्।**[7]

**पापिनाञ्चन्द्रमसप्राप्तौ पुण्यस्य करणं वृथा। आहुतेः पञ्चसङ्ख्याया नियमश्चापि नेष्यते। ...एवञ्च सर्वशब्दोऽपि पुण्यकृद्विषयो भवेत्।**[8]

**नानिष्टादिकारिणो धूमादिमार्ग आरोहावरोहौ किन्तु संयमने यमपुरे तेषां यामीर्यातना ऐहिकदुःखं चानुभूय मुहुः संयमने इह लोके च गतेः श्रुतौ दर्शनात्।**[9]

**भोगार्थं हि चन्द्रलोकगमनम्। तत्र पापिनां भोगासम्भवात् तद्गमनं व्यर्थमेवाऽतश्चन्द्रलोकमेव ते सर्वे गच्छन्तीति श्रुतिरिष्टादिकारिमात्रविषया। सर्वे सुकृतिन एव चन्द्रलोकं गच्छन्तीति। पापिनस्तु यमलोकमारुह्य संयमने यमालये स्वपापानुरूपा यामीर्यातना अनुभूय पुनरिमं लोकं प्रत्यवरोहन्तीत्येवंभूतावेवेतरेषां पापिनामारोहवरोहौ भवतः।**[10]

1. इत्यानन्दतीर्थभगवत्पाद (मध्य) कृतेऽणुभाष्ये, तृतीयेध्याये, श्लो. 1
2. मध्वकृताणुभाष्यस्य छलारीशेषाचार्यविरचितायां तत्त्वप्रकाशिकाव्याख्यायाम्, पृ. 146
3. इति भारतीतीर्थविरचितायां वैयासकन्यायमालायाम्, पृ. 99–100
4. इति शङ्करानन्दविरचितायां ब्रह्मसूत्रदीपिकायाम्, पृ. 75
5. इति प्रौढदेवरायविरचितायां ब्रह्मसूत्रवृत्तौ, पृ. 180
6. इत्यन्नम्भट्टकृतायां ब्रह्मसूत्रवृत्तौ (मिताक्षरायाम्), पृ. 141
7. इति हरीदीक्षितकृतायां ब्रह्मसूत्रवृत्तौ, पृ. 146
8. इति स्वयम्प्रकाशानन्दविरचिते वेदान्तनयभूषणे, पृ. 220
9. इति ब्रह्मानन्दसरस्वतीविरचितायां वेदान्तसूत्रमुक्तावल्याम्, पृ. 137
10. इति ब्रह्मामृतवर्षिण्याम्, पृ. 253

**भोगायैव चन्द्रलोकारोहणं न निष्प्रयोजनम्, नापि प्रत्यवरोहार्थम्।**[1]

**...तस्मादनिष्टादिकारिणां भिन्नैव यमगतिर्बोध्या न तु तेषां पितृयाणगत्या चन्द्ररूढानां सोमभावो नापि तेषामुत्तमशरीरार्थं चन्द्रात् प्रत्यवरोहः।**[2]

**न ते चन्द्रमसं गच्छन्ति। निष्प्रयोजनत्वात्।**[3]

### 2.2. अनिष्टादिकारिषु केचन चन्द्रमसं गच्छन्तीति पक्षः

कोऽपि जनः इष्टमेव वाऽनिष्टमेव वा कर्म न करोति। यो जनः इष्टं बहु करोत्यनिष्टं चाल्पम्, स इष्टादिकारीत्युच्यते, यश्चाऽनिष्टं बहु करोतीष्टं चाल्पम्, सोऽनिष्टादिकारीत्युच्यते। अतः सर्वेऽपि जनाः इष्टमनिष्टं चोभयमपि कर्म कुर्वन्त्येव। तथा चोभयस्याऽपि कर्मणः फलमवश्यमेव भोक्तव्यम् **'नाभुक्तं क्षीयते कर्म'** इत्यादिश्रुतेः। एवं च सति एक एव जनः पापकर्मणः फलभोगाय नरकं गच्छति, पुण्यकर्मणः फलभोगाय च स्वर्गलोकं गच्छतीति स्वीकर्तव्यं भवति। महाभारते स्वर्गारोहणपर्वणि (2/40-41, 48) युधिष्ठिरस्य भ्रातृणां भीमादीनां प्रथमं नरकगमनम्, अनन्तरं च स्वर्गगमनं वर्णितमुपलभ्यते। युधिष्ठिरेणाऽप्येकवारमसत्यं भाषितमिति तस्य दुष्कर्मणः फलभोगाय नरकदर्शनं कृतमिति च तत्रैव वर्णितं वर्तते (3/15-16, 37-39)। अतोऽनिष्टफलभोगार्थं संयमने (नरके) गतानां चन्द्रलोकगमनं नास्तीति वक्तुं न शक्यते। ये तु तीव्रपापाः अत्यल्पपुण्याः चन्द्रलोके भोगरहिताश्च भवन्ति ते चन्द्रलोकं न गच्छन्तीति स्वीकरणीयम्। अनिष्टस्याऽप्याधिक्ये इष्टस्याऽप्याधिक्ये तु नरके प्राप्ता अपि अनिष्टकर्मक्षये सति इष्टफलभोगार्थं चन्द्रलोकं गच्छन्तीति स्वीकर्तव्यमेव। अनिष्टादिकारिणां चन्द्रलोकगमनं नास्तीति स्वीकारे तु चन्द्रलोकादवरोहतां स्वकर्मानुरूपं ब्राह्मणादिजन्म, श्वादिजन्म वा प्राप्नुवन्तीति प्रतिपादिका श्रुतिः सुसङ्गता न भवेत्। **'...आकाशाच्चन्द्रमसमेष सोमो राजा...। तस्मिन्यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते...। त इह व्रीहियवा ओषधि-वनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु दुर्निष्प्रपतरं...। तद् य इह रमणीयचरणा अभ्यासो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं चा सूकरयोनिं वा चण्डालयोनिं वा'**[4] इत्यादिश्रुतिः पापिनामपि चन्द्रलोकादवरोहं प्रतिपादयति।

एष पक्षः कौण्डिन्न्यायनाऽऽचार्यकृतायां ब्रह्ममीमांसासूत्र-कोण्डिन्न्यायनवृत्तौ स्वीकृतो वर्तते। तथा हि-

---

1. इति विद्यानन्दगिरिकृतायां विद्यानन्दवृत्तौ, पृ. 125
2. इति मधुदूदनविद्यावाचस्पतिना मैथिलेन प्रणीते शारीरकविज्ञाने, पृ. 122
3. इति बालगङ्गाधरतिलककृतायां ब्रह्मसूत्रवृत्तौ, पृ. 62
4. छान्दोग्योपनिषदि 5/10/4-7

**वयं तु इष्टादिकारिभिन्नानाम् उत्कटपापानां मन्दुपुण्यानां पुरुषाणां** 'वैवस्वतं सङ्गमनं जनानाम्'[1], 'न साम्पराय: प्रतिभाति बालम्'[2] **इत्यादिकासु श्रुतिषु यमलोकगतेः दर्शनात् पापफलभोगाय यमलोकं प्रति गमनम्, तत्र स्वकर्मानुरूपां यातनाम् अनुभूय शुद्धानां तु पुण्यफले भोक्तव्ये सति यमानुमत्या पुण्यफलोपभोगाय चन्द्रलोकारोहणम्, ततः कृतात्यये कर्मान्तरयुक्तानां कर्मानुसारं ब्राह्मणादिजन्म श्वादिजन्म वा प्राप्तुम् इमं लोकं प्रति अवरोहणं च भवतीत्यर्थस्य प्रतिपादकतयाऽस्य सूत्रस्यार्थः स्वीकर्तव्य इति रोचयामहे। एतादृश एवाऽर्थः चन्द्रलोकादवरोहतां पापानुशयवतां श्वादियोनिप्राप्तिं दर्शयन्त्याः श्रुतेः पुराणेतिहासादिप्रतिपादनानां चाऽनुकूलोऽपि भवेत्। ये तु स्वल्पपुण्या बहुपापाः स्वल्पपुण्यफलभोगानन्तरं चन्द्रलोकात् केवलपापाश्च यमयातनाभोगानन्तरं यमालयादिहाऽऽगत्याऽनेकजन्मपर्यन्तं गोऽजाऽविश्वसूकरखरोष्ट्रमृगपक्षि-कीटपतङ्ग-दन्दशूकजलचरतृणलतागुल्मवृक्षादियोनौ पर्यायेण जायन्ते म्रियन्ते च, तेषा न भूयोभूयः संयमनं प्रत्यपि गमनमावश्यकमिति ते इहैव परिवर्तन्ते इत्येतत् श्रुत्युक्तं तृतीयं स्थानं भवितुमर्हति।**[3] 'पुरुषवचसो भवन्ति' **इति श्रुतेः स्वारस्यात् स्मृतिपुराणवर्णानानुरोधाच्च पापफलभोगेन पापानां क्षये क्रमेणाऽऽरोहिणीं योनिं प्राप्नुवन् जीवो यदा मनुष्ययोनिं प्राप्नोति तदैव पुनः स्वकर्मानुसारं संयमनं प्रति गत्वा यमाज्ञया चन्द्रलोकं प्रति वा ब्रह्मलोकं प्रति वा गच्छति, चन्द्रलोकं प्रति गमने तत्र पुण्यफलमुपभुज्य स्वानुशयानुसारं ब्राह्मणादिमनुष्ययोनिं श्वादियोनिं वा प्रति गन्तुं चावरोहति, पुण्यस्याऽभावे यमालयात् श्वसूकरादियोनिं गन्तुं मर्त्यलोकमेवाऽऽगच्छतीति स्वीकर्तुमुचितं भाति। तदनुकूलानि हि श्रुतिस्मृतिपुराणवचनानि दृश्यन्ते।**[4]

**2.3 अनिष्टादिकारिणः सर्वेऽपि चन्द्रमसं गच्छन्तीति पक्षः**

**'ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति'**[5] इत्यादिश्रुतौ सर्वे चन्द्रमसं गच्छन्तीत्युक्तं वर्तते। अत्र इष्टादिकारिणोऽनिष्टादिकारिणश्च सर्वे एव चन्द्रमसं गच्छन्तीत्युक्तं भवति। परं सूत्रेण अनिष्टादिकारिणो मर्त्यलोकात् प्रथमं संयमनं गच्छन्ति ततस्तेषामारोहावरोहौ भवत इत्युक्तं वर्तते। यदि सूत्रेणाऽनिष्टादिकारिणां चन्द्रलोकगमनं निषिद्धं भवेत् तदा सूत्रे आरोहस्याऽवरोहस्य चोल्लेखो न स्यात्। सदा ह्यनिष्टादिकारिणां चन्द्रलोकगमननिषेधोऽभिप्रेतः स्यात् तदा ते नरकं गच्छन्ति न चन्द्रमसमिति कथनमुचितं स्यात्। अतः सूत्रार्थस्तु 'अनिष्टादिकारिणो मर्त्यलोककारिणो मर्त्यलोकादेव चन्द्रमसं न गच्छन्ति, किन्तु संयमने स्वकर्मानुरूपं दुःखमनुभूय चन्द्रमसं गच्छन्ति, ततः श्रुत्युक्तप्रकारेण

1. ऋ. 10/14/1, अथर्व. 18/3/3/13
2. कठो. 1/2/6
3. छा. 5/9/1
4. इति शिवराजाचार्य-कोण्डिन्न्यायनकृतायां ब्रह्ममीमांसासूत्र-कौण्डिन्न्यायनवृत्तौ, पृ. 290
5. कौषी. 1/2

पुनर्मर्त्यलोकं प्राप्नुवन्ती' ति स्वीकरणीयः इति सर्वेऽपि चन्द्रमसं गच्छन्तीति पक्षमवलम्बतां विदुषां कथनं दृश्यते।

एतं पक्षमवलम्ब्य कृतानां व्याख्यानां वचनान्यधः संक्षेपेण प्रस्तूयन्ते–

**संयमने यमालये दुःखमनुभूयेतरेषामारोहावरोहौ तत्र दुःखमनुभूय चन्द्रमण्डलमारुह्यावरोहन्तीति।**[1]

**अनिष्टादिकारिणां चन्द्रारोहावरोहौ संयमने यमशासने तत्प्रयुक्तयातना अनुभूयैव, नान्यथा।**[2]

**यमालये दुःखमनुभूयाऽनिष्टादिकारिणां चन्द्रमण्डलारोहावरोहौ...।**[3]

**पृथिवीलोकाच्चन्द्रलोके गमनमारोहः, चन्द्रलोकात् पृथिवीलोकं प्रत्यागमनमवरोहः, तावुभौ भवतः, ...अस्ति खलु चन्द्रलोकगमने समानेऽप्यनिष्टादिकारिणामिष्टादिकारिणां च परस्परं विशेषः। अनिष्टादिकारिणो हि संयमने विविधा यामीर्यातना अनुभूय चन्द्रलोकं गच्छन्ति, ता अननुभूय चेष्टादिकारिणः। स्वकर्मफलभोगार्थं नूनमिष्टादिकारिणां चन्द्रलोके गमनमिष्यते, वृष्ट्यादिक्रमेण शरीरपरिग्रहमात्रार्थं चानिष्टादिकारिणामित्यपरोऽपि विशेषोऽनुसन्धातव्यः।**[4]

उदयवीरशास्त्रिणाऽपि स्वविरचिते विद्योदयभाष्यनामके हिन्दीभाषामये ब्रह्मसूत्रव्याख्याने पापिनां संयमने पापफलभोगानन्तरं पापे क्षीणे सति चन्द्रलोके आरोहस्ततो मर्त्यलोकेऽवरोहश्च भवतीत्युक्तं वर्तते (पृ. 545)।

## 3. उक्तानां त्रयाणां पक्षाणां समीक्षणम्

उक्तेषु त्रिषु पक्षेषु मध्ये 'अनिष्टादिकारिणः केऽपि चन्दमसं न गच्छन्ति' इति पक्षमवलम्बमानैरनिष्टादिकारिणां चन्द्रलोकाऽगमने मुख्यरूपेण कारणद्वयमुपन्यस्तम्–**1.** अनिष्टादिकारिणां चन्द्रलोकगमने प्रयोजनाभावाद् भोगाभावाद् वा चन्द्रमसं न गच्छन्ति, **2.** पञ्चमाहुतेर्नियमाभावात् केवलमवरोहार्थं चन्द्रमसं न गच्छन्ति इति। किन्तु बहुभिर्विद्वद्भिः स्वीकृतेऽप्यस्मिन् पक्षे न केनापि श्रुति-स्मृति-पुराणादिवचनप्रमाणमुपन्यस्तमिति एष पक्षः स्वीकर्तुमशक्य एव प्रतीयते।

अनिष्टादिकारिणां चन्द्रलोके भोगाभावादिति यदुक्तं तत् स्वीकर्तुमुचितं न दृश्यते। यतो ह्यनिष्टादिकारिणः सर्वेऽनिष्टमेव कुर्वन्तीति कथयितुं न शक्यते, अतः' अनिष्टफलभोगार्थं नरके प्राप्ता अनिष्टभोगं समाप्येष्टभोगार्थं चन्द्रलोकं गन्तुं शक्नुवन्ति। महाभारते स्वर्गारोहणपर्वण्यागतो

1. इति भास्करविरचिते ब्रह्मसूत्रभाष्ये, पृ. 156
2. इति रामानुजविरचिते श्रीभाष्ये, पृ. 376
3. इति निम्बार्काचार्यप्रणीते वेदान्तपारिजातसौरभे, पृ. 48
4. इति हरिप्रसादवैदिकविरचितायां वेदान्तसूत्रवैदिकवृत्तौ, पृ. 601

भीमादीनां नरकभोगानन्तरं स्वर्गभोगानन्तरं प्रसङ्ग एतमेव पक्षं समर्थयते। महाभारतस्याऽधोलिखितं वचनमपि नरकभोगः स्वर्गभोगश्चैकस्यैव जनस्य क्रमेण भवतीति कथयत्येव–

**अवश्यं नरकस्तात द्रष्टव्यः सर्वराजभिः।।**

**शुभानामशुभानां च द्वौ राशी पुरुषर्षभ।**

**यः पूर्वं सुकृतं भुङ्क्ते पश्चान् निरयमेव सः।।**

**पूर्वं नरकभाग् यस्तु पश्चात् स्वर्गमुपैति सः।**

**भूयिष्ठं पापकर्मा यः स पूर्वं स्वर्गमश्नुते।।**[1]

किञ्च चन्द्रलोकाऽसम्पूर्तिकारणत्वने '**जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते**'[2] इति केवलं तृतीयस्थानस्योल्लेखः कृतो वर्तते न तु नरकमार्गस्य, यदि श्रुतिः नरकगामिनां चन्द्रलोकाऽगमनं स्वीयकरिष्यत् तदा चन्द्रलोकस्याऽसम्पूर्तिकारणत्वेन नरकमार्गस्याऽप्युल्लेख-मकरिष्यत्। किन्तु श्रुतिस्तथा नाऽकार्षीत्। अतः श्रुतिः नरकगामिनामपि चन्द्रलोकगमनं स्वीकरोतीति कथयितुं शक्यते।

'**पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति**'[3] इत्यादिषु श्रुतिषु सामान्यनियमरूपेण मर्त्यलोके जन्मने पञ्चानामाहुतीनां प्रतिपादनं कृतं वर्तते। पञ्चमाहुतिसम्पादनार्थं च चन्द्रलोकगमनमावश्यकं भवति। परं धृष्टद्युम्नसीतादीनां पञ्चानामाहुतीनामभावस्य दर्शनाद् मर्त्यलोके जन्मार्थं पञ्चानामाहुतीनामनिवार्यत्वं नास्तीति केवलं प्रत्यवरोहायाऽनिष्टादिकारिणश्चन्द्रमसं गच्छन्तीति स्वीकरणमत्यावश्यकं तु नास्ति। तथाप्युक्तस्य सामान्यनियमस्य स्वीकारे विरोधाभावात् तत्स्वीकरणमप्युचितमेव दृश्यते। यथा चन्द्रलोकाद् मर्त्यलोकेऽवरोह उक्तो दृश्यते, तथा नरकाद् मर्त्यलोके आरोहोऽवरोहो वा न उक्त इति सर्वेषामेव नरकगामिनां मर्त्यलोकप्राप्त्यर्थं चन्द्रलोकगनमावश्यकं भवतीति श्रुतेराशयो भवेदित्यपि स्वीकर्तुं शक्यते। चन्द्रलोकादवरुह्य स्वपापकर्मानुसारं श्वादिजन्माऽपि प्राप्नुवन्तीति कथयन्ती श्रुतिरनिष्टादिकारिणामपि चन्द्रलोकनमनं स्वीकरोत्येव। तस्मादाहुतेर्नियमाभावाद् नरकगतानां चन्द्रलोकगमनं न भवतीति पक्षोऽपि युक्तियुक्तो नास्तीति कथयितुं शक्यते।

**अनिष्टादिकारिषु मध्ये नरकभोगानन्तरं ये सुकृतभोगार्थं चन्द्रलोकं गच्छन्ति त एव चन्द्रमसं गच्छन्ति, इतरेऽनिष्टादिकारिणः चन्दमसं न गच्छन्ति**' इति पक्षस्तु स्वीकर्तुं शक्य एव दृश्ते। तथापि नरकप्राप्तानां चन्द्रलोकगमने स्वीकृते सति सर्वे एव गच्छन्तीति स्वीकरणमुचितं प्रतिभाति। यतो हि यमालये दुःखमनुभूयाऽनिष्टादिकारिणः चन्द्रलोकमारोहन्ति ततो मर्त्यलोकमवरोहन्तीति सूत्रस्य सामान्योऽर्थो वर्तते, अस्यामवस्थायां चन्द्रलोके भोगं करिष्यतामेवाऽनिष्टादिकारिणां चन्द्रलोकाऽऽरोहो

1. इति स्वर्गारोहणपर्वणि 3/12-14
2. छान्दोग्योपनिषदि 5/10/8
3. छान्दोग्योपनिषदि 5/3/3

नाऽन्येषामिति स्वीकरणमनावश्यकमिव दृश्यते। किञ्च ब्राह्मणादिजन्म लब्धुं चन्द्रलोकादवरोहतां व्रीहियवादिभावः श्रुतो वर्तते–**'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते'**[1] इति व्रीह्यादिभावे प्राप्तेऽपि तेषां तत्र भोगाभावश्च शाङ्करभाष्ये व्याख्यातो वर्तते। ये तु कर्मणैव व्रीह्यादिभावं प्राप्नुवन्ति तेषामेव तत्र भोग इति शाङ्करभाष्यमतम्। एवं एकस्यामेव गतौ कस्यचिद् भोगः कस्यचिदभोगश्च भवितुं शक्नोति चेदनिष्टादिकारिषु मध्येऽपि केचन फलभोगपूर्वकं मर्त्यलोकं प्राप्तुं चन्द्रलोकं गच्छन्ति, केचन केवलं मर्त्यलोकं प्राप्तुं चन्द्रलोकं गच्छन्तीति स्वीकर्तुमपि शक्यत एवं। तस्मात् सर्वेऽप्यनिष्टादिकारिणः संयमने कर्मफलं भुक्त्वा चन्द्रलोकं प्राप्नुवन्तीति स्वीकरणमुचितं दृश्यते।

### 4. निष्कर्षः

अत्र विवेचितेषु त्रिषु पक्षेषु मध्ये 'अनिष्टादिकारिषु मध्ये कोऽपि चन्द्रलोकं न गच्छति' इति प्रथमः पक्षस्तु स्वीकर्तुमुचितो न दृश्यते, प्रमाणाऽभावात्, विरुद्धप्रमाणस्य तर्कस्य च सद्भावात्। यद्यपि 'भोगावशेषा अनिष्टादिकारिणः अनिष्टफलभोगानन्तरमिष्टफलभोगार्थं चन्द्रलोकं गच्छन्ति, नाऽन्ये' इति द्वितीयः पक्षः स्वीकर्तुं शक्य एव दृश्यते, प्रबल-विरुद्ध-प्रमाणाऽभावात्। तथापि प्रबलकारणाऽभावेऽर्धजरतीयन्यायमवलम्ब्य श्रुतिसूत्रोक्तं सूब्जमर्थं परित्यज्याऽर्थान्तरकल्पनमनुचितमिव दृश्यते। तस्मात् **'संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्'** इति सूत्रस्यार्थः–सर्वेऽप्यनिष्टादिकारिणः संयमने स्वकर्मानुरूपां यातनामनुभूय चन्द्रलोके फलभोगं कर्तुं तत्र फलभोगमकर्तुमपि मर्त्यलोकप्राप्त्यर्थं चन्द्रलोकं गच्छन्त्येवेति स्वीकर्तव्यं दृश्यते। **'वादे वादे जायते तत्त्वबोधः'** इत्यस्माकं प्राच्यसिद्धान्तमवलम्ब्य विद्वद्भिरस्मिन् विषये पुनरपि विचारो विधेय इति शम्।

**सन्दर्भग्रंथाः**


1. **छान्दोग्योपनिषद्,** शाङ्करभाष्यसहिता, गीताप्रेस प्रकाशिता, गोरखपुरम्, षोडशं पुनर्मुद्रणम्, 2068 वै.।
2. **कौषीतकिब्राह्मणोपनिषद्** (उपनिषदां समुच्चयः), शङ्करानन्दव्याख्यायुक्ता, आनन्दाश्रम-प्रकाशिता, पुणे, 1925।
3. **महाभारत्,** नीलकण्ठव्याख्यायुक्तम्, (षष्ठो भागः), चित्रशालाप्रेसप्रकाशितम्, पुना 1933।
4. **ब्रह्मसूत्रम्, शाङ्करभाष्योपेतम्,** मोतीलाल-बनारसीदासप्रकाशितम्, दिल्ली 1985।
5. **ब्रह्मसूत्रभाष्यम्,** भास्कराचार्यप्रणीतम्, सम्पादकः विन्ध्येश्वरीप्रसादद्विवेदी, चौखम्बा-संस्कृत-सीरिज आफिसप्रकाशितम्, वाराणसी, 1951।
6. **श्रीभाष्यम्,** रामानुजविरचितम्, संस्कृत-संशोधन-संसत्प्रकाशितम्, यादवाद्रिः (मेलुकोटे), 1995।


1. छान्दोग्योपनिषदि 5/10/6

7. **पूर्णप्रज्ञदर्शनम्,** आनन्दतीर्थभगवत्पूज्यपाद(मध्व)विरचितभाष्यसमेतम्, सम्पादकः प्रकाशकश्च जीवानन्दविद्यासागरभट्टाचार्यः, कलिकाता, 1883।

8. **ब्रह्ममीमांसाभाष्यम्, (वेदान्तपारिजातसौरभम्)** निम्बार्काचार्यविरचितम्, हरिकृष्णदासगुप्तप्रकाशितम्, वाराणसी 1967 वै.।

9. **अणुभाष्यम्,** आनन्दतीर्थभगवत्पादाचार्य(मध्व)विरचितम्, छलारी-शेषाचार्यविरचितया तत्त्वप्रकाशिकाव्याख्यया समलङ्कृतम्, प्राच्यविद्यासंशोधनालय-प्रकाशितम्, मैसुरु, 1985।

10. **वैयासकन्यायमाला,** भारतीतीर्थविरचिता, आनन्दाश्रममुद्रणालयप्रकाशिता, षष्ठावृत्तिः 1966।

11. **ब्रह्मसूत्रदीपिका,** शङ्करानन्दविरचिता, सम्पादकः रामशास्त्रितैलङ्गः, वाराणसी 1904।

12. **ब्रह्मसूत्रवृत्तिः,** प्रौढदेवरायविरचिता, सम्पादकः के.एस. वरदाचार्यः, प्राच्यविद्यासंशोधनालय-प्रकाशिता, मैसुरु, 1982।

13. **ब्रह्मसूत्रवृत्तिः मिताक्षरा,** अन्नम्भट्टकृता, गभर्मेण्ट-ओरिएण्टल-म्यानुस्क्रिप्ट-लाइब्रेरीप्रकाशिता, मद्रास 1950।

14. **ब्रह्मसूत्रवृत्तिः,** हरिदीक्षितकृता, आनन्दाश्रममुद्रणालयप्रकाशिता, पुण्यपत्तनम्, 1917।

15. **वेदान्तसूत्रमुक्तावलिः,** ब्रह्मानन्दसरस्वतीविरचिता, आनन्दाश्रममुद्रणालयप्रकाशिता, पुण्यपत्तनम्, 1915।

16. **ब्रह्मामृतवर्षिणी,** (रामकिङ्करकृत)-ब्रह्मामृतवर्षिणी-शङ्करानन्दकृत-दीपिकाभ्यां समेतानि ब्रह्मसूत्राणि, आनन्दाश्रममुद्रणालयप्रकाशिता, पुण्यपत्तनम्, 1911।

17. **वेदान्तनयभूषणम्,** स्वयम्प्रकाशानन्दविरचितम्, सम्पादकः रामकृष्णप्रपन्नाचार्यः, 2043 वै.।

18. **विद्यानन्दवृत्तिः,** विद्यानन्दगिरिकृता, विशनदासगिरधारिलालप्रकाशिता, दिल्ली, 1969।

19. **शारीरकविज्ञानम्,** मधुसूदनविद्यावाचस्पतिना मैथिलेन प्रणीतम्, द्वितीयो भागः, रामशङ्कर-वाजपेयि-प्रबन्धेन लक्ष्मणपुरे प्रकाशितम्, 1930।

20. **ब्रह्मसूत्रवृत्तिः,** बालगङ्गाधरतिलककृता, तिलक-महाराष्ट्र-विद्यापीठप्रकाशिता, पुणे, 1957।

21. **वेदान्तसूत्रवैदिकवृत्तिः,** हरिप्रसादवैदिकविरचिता, चौखम्बा-संस्कृत-संस्थानप्रकाशिता, वाराणसी, पुनर्मुद्रणम् 1982।

22. **ब्रह्मसूत्रविद्योदयभाष्यम्** (हिन्दीभाष्यम्) उदयवीरशास्त्रिकृतम्, विरजानन्द-वैदिक- संस्थान-प्रकाशितम्, गाजियाबाद, 2023 वै.।

23. **ब्रह्ममीमांसासूत्र-कौण्डिन्न्यायनवृत्तिः,** शिवराजाचार्य-कौण्डिन्न्यायनकृता, चौखम्भा-विद्याभवनप्रकाशिता, वाराणसी, 2002।

# मिथिलायामान्वीक्षिकीविद्यायाश्चिन्तनपरम्पराविकासे महामहोपाध्यायचित्रधरस्यावदानम्

**डॉ० सुन्दरनारायणझाः**

वस्तुतश्चिन्तनमस्माकं दैनिकजीवनेन सम्बद्धं भवति, तस्यालोचनं विश्लेषणञ्च कर्तुं यदा वयमग्रेसरा भवामस्तदाऽसंख्याभिरपराजेयग्रन्थिभिः समस्याभिश्चावृतम्मन्यामहे स्वात्मानम्। यतो वयं ज्ञानेन्द्रियैर्यस्य वस्तुनः साक्षात्कारं कुर्मस्तदेव दृश्यञ्जगदित्युच्यते। अस्य सूक्ष्मातिसूक्ष्मस्वरूपस्य विश्लेषणात्मकमध्ययनमेवाधुनिकविज्ञानस्योद्देश्यमिति मन्ये। परं नैतावतालमिति। अस्य दृश्यस्य द्रष्टा कोऽस्ति? यद्यप्येतज्ज्ञातुं सर्वेषामन्तःस्थले कुतूहलं न भवति तथाप्यस्य ज्ञानमतीव महत्त्वपूर्णमस्ति। ज्ञानात्मकेऽस्मिन् युगे तथ्यस्यास्य महत्त्वमेतदर्थमप्यधिकं सञ्जातं यद्यावधियावद्यत्तत्त्वमस्माभिः दृश्यमुक्त्वा विषयत्वेन स्वीकृतं तदप्याधुनिकं विज्ञानं सचेतनत्वेन विषयित्वेन च साधयति। एतस्यां परिस्थितौ द्रष्टृदृश्ययोर्मध्ये भेदविवेचनमत्यन्तं कठिनं सूक्ष्मञ्च सम्भवति। एतदतिरिक्तं प्रबुद्धस्य चिन्तकस्य बुद्धिः तत्राप्याकृष्टा भवति यद्द्रष्टृदृश्ययोश्च परस्परसम्बन्धस्य कारकं किं तत्त्वमस्ति येन सूर्य-चन्द्र-नक्षत्रमण्डल-पृथ्वी-वाय्वादीन्यतिमहनीयानि प्राकृतिकतत्त्वानि, प्राणिनामखिलो व्यापारश्च नियन्त्रितो भवति। दृश्यस्य, द्रष्टुर्नियन्तुश्च विषये विवेचनं कृत्वा तेषां वास्तविकस्वरूपाणां ज्ञानमेव दर्शनशास्त्रस्य विवेच्यो विषयोऽस्ति। एतस्मादेव कारणान्न केवलं भारतस्यैवापित्वखिलविश्वस्य दार्शनिकचिन्तकाः जीवस्य, जगतः, ईश्वरस्यैव च विविधरूपेण विवेचनं कृतवन्तः।

दर्शनशास्त्रे विषयविवेचनस्य मार्गद्वयं विहितमस्ति। तन्मार्गप्रयोक्तृष्वेको **लक्षणैकचक्षुष्को** द्वितीयो **लक्ष्यैकचक्षुष्क** इत्युच्यते। लक्ष्यैकचक्षुष्कश्चिन्तकः पूर्वं स्वीयं लक्ष्यं निर्धारयति तत्पश्चात् तदनुरूपं लक्षणं सृजति। यथाऽद्वैतवेदान्तः प्रथमं सच्चिदानन्दस्वरूपब्रह्मणो जीवब्रह्मणोर्वैकत्वरूपं लक्ष्यं निर्धारयति तदनन्तरं तत्सिद्ध्यर्थमपेक्षितप्रमाणानां सिद्धान्तानाञ्चोपस्थापनङ्करोति। एतादृश्येव स्थितिः सांख्यदर्शनस्य मीमांसादर्शनस्याप्यस्ति। परं न्यायवैशेषिकप्रभृतीनि दर्शनानि कस्यचिदन्यवादप्रमाणस्य पद्धतिं प्रमेयादधिकं महत्त्वमेतदर्थ प्रयच्छन्ति यतस्तस्य प्रबलत्वात्प्रमेयस्य पुष्टिः सुतरां सरलेन भवति। दर्शनशास्त्रस्येयं प्रक्रिया न्यायदर्शनमित्येतेन नाम्ना व्यवह्रियते या न्यायशास्त्रस्य नूतनधारायां प्राचीनादधिकमात्रायां सुस्पष्टतया च व्यवहृतास्ति। अत एवास्य न्यायदर्शनस्य परिभाषां विलिखता वात्स्यायनेनोक्तम्- **प्रमाणैरर्थपरीक्षणं न्यायः।**

इमामेव परिभाषामाधृत्य वार्त्तिककारेणास्य लक्षणमित्थं प्रत्यपादि–

**समस्तप्रमाणव्यापारादर्थाधिगतिर्न्यायः।**

न्यायविद्याया द्वितीयमभिधानमान्वीक्षिकी'त्यस्यार्थविधानङ्कुर्वता न्यायभाष्यकारेण वात्स्यायनेनोक्तम्–

**प्रत्यक्षागमाभ्यां ईक्षितस्य अन्वीक्षणमन्वीक्षा,**

**तया प्रवर्त्तत इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रम्॥**

अर्थात्तर्कसाहाय्येन प्रत्यक्षादीनां प्रमाणानामाधारेण कस्यचित्सिद्धान्तस्य परीक्षणमेव न्यायस्य कार्यमिति। तदुक्तमपि– **प्रमाणानामनुग्राहकस्तर्क**[1] इति। न्यायसूत्रकारेणापि षोडशपदार्थेषु तर्कनामानं पदार्थः स्वीकृतः। तस्य लक्षणं यथा– **अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः।**[2] परं केशवमिश्रस्य **तर्कभाषा**, अन्नंभट्टस्य **तर्कसङ्ग्रह** इत्यादीनां तर्कसम्बन्धिग्रन्थानां टीकाकारैस्तर्कशब्दस्य व्युत्पत्तिरेवं कृतः– **तर्क्यन्ते प्रतिपाद्यन्ते, इति तर्काः प्रमाणादयः षोडशपदार्था** इति। एवमुक्तप्रकारेण तर्कस्यार्थः षोडशपदार्थ इत्येव प्रस्तुतोऽस्ति। न्यायशास्त्रान्तर्गतं तर्कस्यैतन्महत्त्वमभिलक्ष्यैवैतच्छास्त्रं तर्कविद्येत्युच्यते।

तर्को मननं चिन्तनञ्च विचारशीलस्य मानवस्य नैसर्गिकी आवश्यकतेति। दुःखात्पीडितो मानवस्तस्य निवारणायोपायस्यान्वेषणं करोति। तस्मिन्ननवरतान्वेषणे तस्य हृदि विभिन्नाः प्रश्नाः समुत्पन्नाः भवन्ति, ये खलु संशयनाम्ना व्यवह्रियन्ते। अस्य संशयस्य परिभाषा न्यायसूत्रकारेण एवं प्रदत्ता–

**समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः।**[3]

संशयसमाधानमवाप्तुमेवेयं तर्कस्य प्रक्रिया समुदिता भवति। यतस्तु संशयादेव तर्कस्योद्गमस्तस्मादुक्तं वात्स्यायनेन–

**नानुपलब्धेऽर्थे न निर्णीतेऽर्थे न्यायः प्रवर्तते, किं तर्हि? संशयितेऽर्थे।**[4]

अर्थात् कस्यापि वस्तुनो विषये प्रश्नस्योत्पत्तिरेवेदं द्योतयति यन्न तु तद्वस्तु पूर्णरूपेणाज्ञातो न च पूर्णतो ज्ञात एवास्ति। तर्कसाहाय्येन समस्यायाः समाधानमन्वेष्टुं निर्णयं वा कर्तुं शक्यते। निर्णय-स्वरूपमाह गौतमो यथा– **विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय**[5] इति। अर्थादर्थपरीक्षणेन सह स्वसिद्धान्तानां प्रतिपक्षिभ्यस्संरक्षणमपि न्यायशास्त्रस्य सूक्ष्मपरीक्षणात्मिकया प्रक्रियैव सम्भवम्। अत एव न्यायशास्त्रे जल्पवितण्डे चोभे पदार्थरूपेण प्रतिष्ठिते स्तः। सिद्धान्तसंरक्षणसहायकत्वेनोभयोः

1. न्यायभाष्ये- १/१/१
2. न्यायसूत्रे- १/१/४०
3. न्यायसूत्रे- १/२३
4. न्यायभाष्ये- १/१/१
5. न्यायसूत्रे- १/१/१४

प्रयोजनं न्यायभाष्यकारेण निर्दिष्टं यथा- **तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे, बीजप्ररोहकण्टक-शाखावरणवत्** इति।

अनेनोक्तप्रकारेण न्यायशास्त्रस्य वस्तुपरीक्षणप्रक्रिया सर्वाधिकवैज्ञानिकी प्रतीयते। कस्यापि तत्त्वस्य लौकिकस्यालौकिकस्य वा वास्तविकस्वरूपज्ञानोपलब्धेः यादृशी क्षमताऽत्र विद्यते न तादृशी क्षमता कस्मिंश्चिदन्यस्मिन् शास्त्रे समवलोक्यते। अत एवास्य महत्त्वप्रतिपादने प्रोक्तं यत्-

**प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।**
**आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता॥**

अतः संस्कृतसाहित्यस्य समस्तास्वपि विद्यासु परिष्कृतज्ञानावाप्तये न्यायविद्यायाः प्राथमिकं ज्ञानमनिवार्यमस्ति। अस्या विद्याया विभिन्नानि प्राचीननामानि सन्ति, यथा- **आन्वीक्षिकी, हेतुशास्त्रम्, हेतुविद्या, तर्कविद्या, तर्कशास्त्रम्, वादविद्या, न्यायविद्या, न्यायशास्त्रम्, प्रमाणशास्त्रम्, वाकोवाक्यम्, तक्की, विमंसी** इत्यादीनि। शास्त्रमिदं पूर्णतो वैज्ञानिकम्मन्यते शास्त्रविद्भिः। तस्य च वैज्ञानिकशास्त्रस्य न्यायदर्शनस्य द्विविधा धारा प्रसिद्धाऽस्ति। प्रथमधाराया उद्गमो गौतमसूत्रग्रन्थात्, द्वितीयधारायाश्चोद्गमो गङ्गेशोपाध्यायकृततत्त्वचिन्तामणिग्रन्थान्मन्यते। तौ चोभौ ग्रन्थकारौ गौतमगङ्गेशौ मिथिलादेशीयौ प्रसिद्धौ स्तः। प्रथमा धारा प्राचीनन्यायस्य प्रवर्त्तिका, द्वितीया च धारा नव्यन्यायस्य। तेनेदं सिद्धं यन्मिथिला न्यायशास्त्रस्य किं वा आन्वीक्षिकीविद्यायाः धाराप्रवाहिकाऽस्तीति।

## नव्यप्राचीनन्याययोरन्तरम्

नव्यप्राचीनन्याययोर्मध्ये पर्याप्तमन्तरमस्ति। प्राचीनन्यायः षोडशपदार्थानां निरूपकत्वात् **पदार्थमीमांसात्मक** (कैटेगोरिस्टिक) शास्त्ररूपेण प्रसिद्धिं गतः। नव्यन्यायश्च प्रमाणानां मीमांसा कारणात् **प्रमाणमीमांसात्मक** (एपिस्टोमोलोजिकल) शास्त्ररूपेण प्रसिद्धोऽस्ति। प्राचीनन्याय अध्यात्मप्रधानः, नव्यन्यायः शुष्कतर्कप्रधानोऽस्ति। यद्यपि प्राचीनन्यायेऽपि तर्कस्य न्यूनता नास्ति। अत्र वादादारभ्य निग्रहस्थानपर्यन्तस्य प्रमेययोजना वृहत्तर्कस्यैव प्रमाणमस्ति। परन्त्वेतत्तु स्वीकरणीयमेव भविष्यति यद् बौद्धैस्सह जातप्रतिवादकारणात् नव्यन्यायस्य तर्कविधिरत्यन्तमुखरा आकर्षिका चास्ति। वस्तुतः सत्यमेतद्यत् प्राचीनन्यायस्य लक्ष्यं मुक्तिरासीत्, नव्यन्यायस्य लक्ष्यं शुष्कतर्क एवासीत्।

## महामहोपाध्यायचित्रधरस्यावदानम्

वेदपुराणप्रथिता मिथिला राजर्षिजनककालादेवाध्यात्मविद्यायाः केन्द्रत्वेन स्तुताऽस्ति। जनकस्य राजसभायां ब्रह्मिष्ठस्यान्वेषणमभवत् तस्मिन्नेव क्रमे योगीश्वरस्य याज्ञवल्क्यस्य गार्गीतिनाम्न्या विदुष्या सहाध्यात्मविषयकः शास्त्रार्थोऽप्यस्यामेव भूमावभवत्। इयं भूमिः भारतस्य गरिममय्याः संस्कृतेः प्रेरिका सती सहस्राब्दं यावत् श्रेष्ठदार्शनिकानां कवीनाञ्चामृतमय्या काव्यधारयाऽऽप्लाविता भूत्वा विद्याया अधिष्ठात्री सरस्वतीव गौरवान्विता पूजिता च जातेति। तदुक्तं कविना कर्णपूरेण स्वकीये पारिजातहरणमहाकाव्ये-

**जानकीजननभूमिरीक्ष्यतां अम्बुजाक्षिमिथिलेयमग्रतः।**
**यत्र विज्ञवदनेषु दर्पिता नृत्यति प्रतिगृहं सरस्वती॥**

मिथिलायां पल्लविताया विदुषामद्भुतपरम्परायाश्चास्या इदं वैलक्षण्यमस्ति यदस्यां परम्परायां ये विद्वांसो बभूवुस्ते गम्भीरदार्शनिकचिन्तने साहित्यस्य कमनीयपक्षस्य च प्रणयने समानां रुचिं निदध ति स्म। एतादृशानां दार्शनिककवीनां परम्परायामस्यां महामहोपाध्यायशङ्करस्य, महामहोपाध्यायगोकुलनाथस्य, सर्वतन्त्रस्वतन्त्रधर्मदत्तादीनाञ्च नामानि विशेषरूपेणोल्लेखनीयानि सन्ति। अस्या भूमेर्विदुषामयमुद्घोष आसीद्यत्-

**काव्येषु कोमलधियो वयमेव नान्ये।**
**तर्केषु कर्कशधियो वयमेव नान्ये॥**

महामहोपाध्यायश्चित्रधरोऽपि तस्या एव परम्पराया परिपोषक आसीद्या मुख्यरूपेण काव्यप्रणयने तत्पराऽऽसीत् सहैव दार्शनिकग्रन्थरचनायामपि रुचिमादधानाऽऽसीदिति।

वस्तुतो मिथिलायां प्रणीतं दर्शनसम्बन्धिविपुलवाङ्मयमधिकाधिकं न्यायशास्त्रस्य नवीनधारया सम्बद्धमस्ति। तेन यद्येवमुच्येत यन्नव्यन्यायस्य परम्परायाः विपुलांशसर्जनस्य श्रेयो मिथिलाभूमेरस्ति चेदतिशयोक्तिर्न भविष्यतीति मन्ये। यतस्तु मिथिलायां नव्यन्यायस्य पल्लवनपरम्परायाश्चैकः स्वतन्त्र इतिहासो वर्तते, यस्य केचनांशाः प्रकाशमानीताः केचनावशिष्टाश्च वर्तन्ते।

अस्मिन्नवसरे महामहोपाध्यायचित्रधरस्य स्मरणं नितान्तं पुण्यास्पदमस्ति यत्तस्मिन् दार्शनिकत्वस्य कवित्वस्य च समन्वयो दृश्यते। म0म0चित्रधरो म0म0वंशधरस्य ज्येष्ठपुत्रः, रसकल्पद्रुमकारस्य म0म0 चतुर्भुजस्य पौत्रश्चासीत्। म0म0 वंशधरस्य गणना मिथिलायामुत्कृष्टन्यायविद्वत्सु क्रियते। अस्य कृतिर्गौतमसूत्रस्य व्याख्या **न्यायसूत्रवृत्तिः**, न्यायतत्त्वचिन्तामणिग्रन्थस्य टीका **अन्वीक्षातत्त्वपरीक्षा** चेति द्वौ न्यायस्यापूर्वौ ग्रन्थौ स्तः, यस्य प्रकाशनमद्यावधियावन्नैवाभवत्, अन्वीक्षातत्त्वपरीक्षायाः पाण्डुलिपिर्दरभङ्गासंस्कृतविश्वविद्यालये स्थापितोऽस्ति। म0म0 वंशधरस्य मातुलो म0म0चित्रधरस्य गुरुः, म0म0विद्यानिधिपीताम्बरस्य पुत्रश्च म0म0गोकुलनाथोऽपि उदयन-वाचस्पति-पक्षधरादीनां नैयायिकानां परम्परायाः संरक्षको मन्यते।

म0म0 चित्रधरस्य निवासस्थानं मधुबनीमण्डलान्तर्गतं मङ्गलवनी'ति (मङ्गरौनी) ग्रामे आसीत्। अस्य कालोऽष्टादशशताब्द्यां मन्यते। अस्याष्टौ कृतयः **प्रमाणप्रमोदः** (श्रीला. ब. शा. रा. सं. विद्यापीठात् १९६८ ई. वर्षे प्रकाशितः), **प्रतिरोग्यारोपविचारः**, **विभक्त्यर्थनिर्णयः**, **वीरतरङ्गिणी**, **शृङ्गारसारिणी**, **राजस्तुतिपद्यम्**, **विनायकस्तवः**, **चित्रमीमांसा** चेति सन्ति। अस्ति मदीयं सौभाग्यं यदेतेषां नैयायिकप्रवराणाङ्कुले मम जन्म अभवत्। वंशावल्यनुसारेणेमे मम वृद्धातिवृद्धातिवृद्ध-प्रपितामहभ्राता (अर्थान्मम वृद्धप्रपितामहानां वृद्धप्रपितामहाः धरणीधरास्तेषामग्रजा इमे चित्रधरोपाध्यायवर्याः) आसन्।

**म०म०चित्रधरकृतस्य प्रमाणप्रमोदस्य प्रतिपाद्यम्**

प्रकृतो ग्रन्थो **प्रमाणप्रमोद** उदयनाचार्यस्य **न्यायकुसुमाञ्जलि**रिति ग्रन्थस्य परम्परायां लिखितस्तादृशो ग्रन्थोऽस्ति यो नव्यन्यायस्येश्वरसिद्धिमात्रमाश्रित्य स्वीयां विवेचनां प्रस्तौति। ग्रन्थस्यास्य मङ्गलाचरणमीश्वरस्मरणेन सह स्वीयं स्वतन्त्रं काव्यसौष्ठवमपि संरक्षति। ग्रन्थेऽस्मिन् उपनिषन्मुग्धा नायिकात्वेन, ईश्वरश्च चतुरनायकत्वेन प्रस्तुतस्तेनास्य लेखकस्य साहित्यिकमर्मज्ञताऽपि सुस्पष्टीभवति।

प्रकृतग्रन्थस्य विषयवस्तुन: समारम्भो **श्रोतव्यो मन्तव्य** इति श्रुतिवाक्यस्य विश्लेषणाद्भवति, यत: श्रुतिपदस्यार्थो ग्रन्थकारेण प्रमाणवाक्यमात्रमिति निर्दिष्ट:। यच्च श्रुतिस्मृतिपुराणेतिहासादिगतं ईश्वरप्रतिपादकं वाक्यमभिलक्षयति।

ग्रन्थेऽस्मिन् प्रतिपादितानामीश्वरसाधकनवानुमानानां संक्षिप्तं विवरणमुपस्थाप्यते–

**1. जन्यकृत्यजन्यो जन्योभावः स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिजन्यो जन्यभावत्वात् (कार्यत्वात्) इत्यनुमानशरीरम्।**[1]

अर्थात्सृष्टिरियं जन्यकृतितोऽजन्यविशेषणविशिष्टसिद्धा सत्यपि स्वोपादानविषयका– परोक्षज्ञानं चिकीर्षया कृतिना च जन्योऽस्ति, यत इयं जन्यभावत्वात् कार्यरूपाऽस्ति। तस्य कारणमिदमस्ति यत्सृष्टिर्न कस्यचित्साधारणपुरुषस्य कर्म तथापि कार्यत्वात् पुरुषविशेषस्य कार्यं भवितुमर्हति। स च पुरुष ईश्वर एवास्ति।

**2. सर्गाद्यकालीनद्व्यणुकजनकारम्भकसंयोगजनकं कर्मप्रयत्नजन्यं कर्मत्वात् चेष्टावत्।**[2]

तात्पर्यमिदमस्ति यत्सृष्ट्यारम्भे परमाणुद्वयसंयोगाद्द्व्यणुकस्योत्पत्तिः, द्व्यणुकत्रयात् त्रसरेणोः, चतुर्भिस्त्रसरेणुभिश्चतुरणुकोत्पत्तिरित्यनेन क्रमेण सृष्ट्युत्पत्तिर्मन्यते। तत्र जडपरमाणुषु संयोगमुत्पादयितुं कस्यचिच्चेतनपदार्थस्यापेक्षा भवति। तदानीं न कश्चिच्चेतनपदार्थ: तत्रोपस्थितो भवत्यतश्चेतनतत्त्वरूपेण तत्रेश्वरस्य कल्पना क्रियते।

**3. क्षितौ पतनाभावः पतनप्रतिबन्धकप्रयोज्यः गृरुवृत्तिपतनाभावत्वात्, घटादिवृत्ति-पतनाभाववत्।**[3]

वयं जानीमो यदियं पृथ्वी गुरुत्वसम्पन्नाऽस्ति, तथाप्यस्या: पृथिव्या: पतनाभावो दृश्यते।

तत्र कारणं पतनप्रतिबन्धकस्योपस्थितिरिति, तस्य च पतनस्य प्रतिबन्धको नान्य: कश्चिदीश्वरादि्भन्नो भवितुमर्हति।

---

1. प्रमाणप्रमोदे– ११ तमे पृष्ठे।
2. प्रमाणप्रमोदे– १७-१८ तम पृष्ठयो:।
3. प्रमाणप्रमोदे– १८ तमे पृष्ठे।

**4. जन्यकृत्यजन्यो नाशः, अदृष्टमद्वारीकृत्य प्रयत्नप्रयोज्यः नाशत्वात् मुद्गरप्रहार-प्रयोज्यघटनाशवत्।**[1]

सृष्टेर्विनाशो न साधारणमनुष्यकृतिजन्योऽस्ति, न च नाशः प्रयत्नं विना सम्भवस्तस्मात् तस्य प्रयत्नस्यापि प्रयोजकस्तमीश्वरं विहाय नान्यः कश्चिद्भवितुमर्हति।

**5. सामान्यतो वाग्व्यवहारो लिप्यादिव्यवहारो वा स्वतन्त्रपुरुषविश्रान्तः, व्यवहारत्वात् चैत्रबुद्धिवैलक्षण्यप्रयुक्तापूर्वव्यवहारवत्।**[2]

लिपिव्यवहारो वाग्व्यवहारश्च स्वतन्त्रपुरुषप्रयोज्यो भवति व्यवहाररूपत्वात्। सृष्ट्यादौ लिप्यादीनां कलानां प्रशिक्षको न कश्चिन्मनुष्य आसीत्तस्मात्तस्य व्यवहारस्य प्रवर्त्तकोऽपीश्वर एव सम्भवति।

**6. सर्गाद्यकालीनवेदवाक्यजन्या शाब्दप्रमा वक्तृवाक्यार्थयथार्थज्ञानजन्या, शाब्दप्रमात्वात्।**[3]

सृष्ट्यारम्भे विरचितं यत्प्रामाणिकं वेदज्ञानमित्यस्ति, तत्प्रामाणिकेनैव रचनाकर्त्रा विरचितम्भवितुमर्हति। यतः सर्गादौ न कस्यापि मनुष्यस्य सत्ता (स्थितिः) सम्भवति, न च तस्य मानवस्य ज्ञानमेतावत्प्रामाणिकमेव भवितुमर्हति, वेदस्य यथार्थज्ञानत्वात्।

**7. वेदाः पौरुषेयाः वेदत्वात्। यन्नैवं तन्नैवं यथा घटः।**[4]

वेदाः पौरुषेयाः सन्ति, अर्थाद्विशेषपुरुषेणेश्वरेण साध्याः सन्ति, वेदत्वात्। यतो वेदे निर्माणकर्तृत्वमस्मदादीनां न सम्भवतीत्यतीतबोधसहकारेणानादिनिधनचैतनयसचिवस्त्वेक एव श्रीमदीश्वरस्तत्तद्वेदी वक्ता सिद्ध्यतीति भावः। तेनेदं फलितं यद्यो न पौरुषेयो न तद्वेदोऽपि, यथा घट इति।

**8. वेदाः पुरुषोच्चरिताः वाक्यत्वात्, चैत्राद्युच्चरितवाक्यवत्, वाक्यत्वहेतुकमन्वयि।**[5]

वेदेषु शब्दनिर्मितवाक्यानां प्रयोगोऽस्ति। वाक्यानामुच्चारणन्तु पुरुषेणैव भवितुमर्हति, तस्माद्वेदाः पुरुषोच्चारिता भवन्ति वाक्यत्वात्, यथा चैत्रादिभिर्बौद्धैरुच्चरितानि वाक्यान्येवमेव वेदा अपि पुरुषोच्चारितत्वात्पौरुषेयाः सन्ति, परमिदं ध्यातव्यमेव यन्न वैदिकशब्दाः साधारणपुरुषोच्चारिताः सन्त्यपितु परात्परेण पुरुषेणोच्चारिताः पौरुषेयाः सन्ति। तस्येश्वरस्यापि पुरुषत्वं वेदे प्रतिपादितमेव **सहस्रशीर्षा पुरुषः** इत्यादिषु मन्त्रेषु।

---

1. प्रमाणप्रमोदे- १९ तमे।
2. प्रमाणप्रमोदे- २१ तमे पृष्ठे।
3. प्रमाणप्रमोदे- २४-२५ तम पृष्ठयोः।
4. प्रमाणप्रमोदे- ५ तमे पृष्ठे।
5. प्रमाणप्रमोदे- २५ तमे पृष्ठे।

**9. द्व्यणुकपरिमाणं संख्याजन्यं परिमाणप्रचयाजन्यत्वे सति, जन्यपरिमाणत्वात्।**[1]

अर्थाद्द्व्यणुकपरिमाणं संख्याजन्यमस्ति, परिमाणप्रचयाभ्यामजन्यत्वे सत्यपि जन्यपरिमाणत्वात्। तात्पर्यमिदमस्ति यत्सृष्ट्यारम्भे तस्येश्वरस्यैवापेक्षितया बुद्ध्या संख्यया परमाणुद्वयसंयोगाद्द्व्यणुकस्य, त्रिभिर्द्व्यणुकैस्त्रसरेणोः, त्रसरेणुभिश्चतुरणुकादीनां निर्माणं सम्भवति, येन क्रमशः सृष्टिर्भवति। तस्मादीश्वरस्य सत्तानिवार्यत्वेन स्वीक्रियते। तस्योपस्थितिं विना त्वस्य जगतः कश्चिदाधार एव नोपलभ्यते।

मुख्यरूपेणोपर्युक्तानां नवयुक्तीनामाधारेण प्रमाणप्रमोदे ईश्वरसिद्धेः प्रयासो म0म0चित्रधरेण विहितोऽस्ति। ईश्वरस्यास्तित्वसाधने नवविधानुमानानामुपस्थापनं सर्वथा न्यायप्रेरितं नवीनञ्चेति प्रतीयते। अस्याचार्यस्य विचारशैली न्यायरसगुम्फिता, भौतिकवादस्य नास्तिकतावादस्य च प्रबलेन प्रहारेण स्वीयास्तित्वाद् वञ्चितानामास्तिकानां हस्ते ब्रह्मदण्ड इव सुशोभते।

1. प्रमाणप्रमोदे- २६ तमे पृष्ठे।

# शाङ्करवेदान्ते काश्मीरशैवदर्शने च वर्णितस्य प्रमातुः स्वरूपस्याध्ययनम्

**डॉ. मेघराजमीणा**

भारतीयदार्शनिकपरम्परायां ज्ञानमीमांसीयचिन्तनस्य केन्द्रस्थानीया भूमिकाऽस्ति। ज्ञानप्रक्रियायां ज्ञानस्य (प्रमायाः) ज्ञानस्याधिकारिणः (प्रमातुः) ज्ञानविषयस्य (प्रमेयस्य) ज्ञानसाधनस्य (प्रमाणस्य) च परस्परसंबंधस्य च चर्चा क्रियते। अयमुल्लेखः न्यायशास्त्रे प्रतिपादितोऽस्ति।[1] यथार्थं ज्ञानं प्रमेत्यभिध ीयते। तस्याश्च प्रमाया अधिकरणम्प्रमाता भवति, अतस्तस्य स्थानं महत्त्वपूर्णमस्ति। प्रमातुः ज्ञानमेव तस्य व्यवहारजातस्य हेतुरस्ति।[2] चैतन्यमिति ज्ञानशब्दस्य व्यापकोऽर्थः। चैतन्यमेव प्रमातृत्वेन सम्भवति सर्वेष्वपि वैदिकदर्शनेषु। अयं प्रमाता चैतन्याश्रम आत्मा इति न्यायशास्त्रे भण्यते नामं विना कस्यापि ज्ञानस्य स्थितिः कल्पयितुं शक्यते। अद्वैतवेदान्ते, अद्वयकाश्मीरशैवशास्त्रेऽपि चेतनतत्त्वमेव प्रमातृत्वेनावतिष्ठन्ते। अत्र प्रमातुः स्पष्टं, सुव्यवस्थितम् उत्कृष्टञ्च रूपं वर्णितमस्ति। प्रस्तुतशोधपत्रस्योद्देश्यम् अद्वैतवेदान्ते प्रत्यभिज्ञादर्शने च वर्णितस्य प्रमातुः स्वरूपस्य विवरणपूर्वकमनयोः तुलनात्मकमध्ययन-मित्यस्ति।

वेदान्तपरिभाषायां प्रमायाः स्वरूपविवेचनप्रसङ्गे उक्तम् - **अनधिगताबाधितविषयज्ञानमेव प्रमेति।**[3] पूर्वतोऽज्ञातस्य अर्थात् सर्वथा नवीनस्य उत्तरज्ञानेन च अनन्यथासिद्धस्येव ज्ञानस्याभिधानं प्रमा भवति।[4] किन्तु तत्त्वज्ञानक्रमे घटादीनां लौकिकपदार्थानां (मिथ्याविषयाणां) ज्ञानस्य बाधः भवति, पुनः लौकिकविषयेषु प्रमा कथमुत्पद्येत अस्मिन् प्रसङ्गे प्रमातुः अवस्थाद्वैविध्यस्य वर्णनमुपदिश्यते–

1. पारमार्थिकी दशा,
2. व्यावहारिकी दशा चेति।

अबाधितेति पदव्याख्याने उच्यते–ब्रह्मसाक्षात्कारे सति (पारमार्थिकदशायां) तत्त्वज्ञस्य प्रमातुः दृष्टौ समस्तं जगद् आत्मरूपमेव प्रतिभाति। तत्र प्रमातृ-प्रमाण-प्रमेयरूपभेदः समाप्तिमेति, अस्यां

1. प्रमाता प्रमाणं प्रमेयं प्रमितिरिति चतुसृषु विधासु तत्त्वं परिसमाप्यते। न्यायमंजरी, 1/1/3
2. सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम्। तर्कसंग्रहः, पृ.सं. 104
3. अनधिगताबाधितविषयज्ञानत्वम्। वेदान्तपरिभाषा, पृ.सं. 9
4. अबाधितविषयज्ञानत्वम्। (वेदान्तपरिभाषा, पृ.सं. 9)

दशायां कः कं कथञ्च पश्यति?[1] किन्तु सांसारिक-(व्यावहारिक) दशायां घटादीनां लौकिकपदार्थानां ज्ञानमेव प्रमा भवति, न तेषां बाधः जायते। संसारदशायां द्वैतस्मन् जीवस्सन् प्रमाता इतरं विषयं पश्यति।[2] एवं वेदान्तपरिभाषायां परमसत्ताया (चेतनतत्त्वस्य) अनुभवानुसारं प्रमातुः वर्गीकरणं द्विविधं क्रियते–

1. अद्वैततत्त्वस्य ज्ञाता, शुद्धचैतन्यस्य ज्ञाता, ब्रह्मज्ञः, तत्त्वज्ञो वा।
2. द्वैतविषयाणां सांसारिकपदार्थानां वा ज्ञाता जीवः (प्रमाता)।

ज्ञानमीमांसीयदृष्ट्या वेदान्तदर्शने त्रिकालबाधितस्य एकमात्रस्य ब्रह्मज्ञानस्यैवाङ्गीकारः प्रमातृत्वेन क्रियते। एकमेव चैतन्यं प्रमाणरूपेण ज्ञानस्य साधनं स्वीक्रियते, प्रमातृत्वेन ज्ञाता, प्रमेयरूपेण श्रेयश्च भवति। अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यं भवति।[3]

अद्वैतवेदान्तस्य प्रमाणमीमांसीय व्यवस्थायां जीवः ज्ञातृत्वेन विद्यते अयमन्तःकरणसाक्षिणोः योगभूतोऽस्ति। स च साक्षी चैतन्यमात्रोऽस्ति[4] साक्षी च चैतन्यमेव। जीवे भौतिकतत्त्वमन्तःकरणमस्ति। साक्षी चैतन्यस्मन् अन्तःकरणस्य वृत्तीनां द्रष्टा भवति। अस्य अभिव्यक्तिः भौतिकतत्त्वस्य साहचर्येण भवति। जीवस्य व्यावहारिकी सत्ता भौतिकाभौतिकतत्त्वानां योगः अस्ति। चेतनांशः साक्षी ज्ञानस्य सर्वेषु रूपेषु उपस्थितो भवति। साक्षिण अनुप्राणिता वृत्तिरेव ज्ञानं भवति। ज्ञानम् अन्तःकरणस्य वृत्तिः तथा अस्याः प्रकाशितः चेतनतत्त्वस्य साक्षिणः सम्मिलितरूपम् अस्ति। साक्षी एवं अन्तःकरणस्य वृत्तीनाम्प्रकाशकः प्रमाता अस्ति। वेदान्तसारे सर्वप्रथमम् अनुबन्धचतुष्टयस्य निरूपणे अधिकारिणश्चर्चा आयाति–

**अधिकारी तु विधिवदधीतवेदवेदाङ्गत्वेनापाततोऽधिगताखिलवेदार्थोऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरःसरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिल-कल्मषतया नितान्तनिर्मलस्वान्तःसाधनचतुष्टयसम्पन्नः प्रमाता।**

अर्थात् वेदान्तविद्याया अपेक्षितयोग्यतासम्पन्नः पुरुषः अधिकारीत्युच्यते। अधिकारिणे इदम् अनिवार्यमस्ति यत् स प्रमाता भवेत्। वैदिकलौकिकव्यवहारेषु अभ्रान्तता अर्थात् यथार्थज्ञानाधारेण लौकिकव्यवहाराणां सम्पादनं प्रमातृशब्दस्य तात्पर्यं भवति।

---

1. ब्रह्मसाक्षात्कारानन्तरं हि घटादिनां बाधः, 'यत्र त्वस्य सर्वमात्मैवाभूत तत्केन कं पश्येत्' (बृहदारण्यकोपनिषद् 4/5/15) इति श्रुतेः...(वेदान्तपरिभाषा, पृ. सं. 17)
2. ...न तु संसारदशायां बाधः, 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' (बृहदारण्यकोपनिषद् 4/5/15) इति श्रुतेः. ..(वेदान्तपरिभाषा, पृ. सं. 17)
3. तथा हि त्रिविधं चैतन्यं प्रमाणचैतन्यं प्रमाणचैतन्यं प्रमातृचैतन्यं चेति। तत्र घटाद्यवच्छिन्नं विषयचैतन्यम्, अन्तःकरणवृत्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यम्, अन्तः करणावच्छिन्नं, चैतन्यं प्रमातृचैतन्यम्। (वेदान्तपरिभाषा, पृ. सं. 37)
4. जीवो नामान्तःकरणावच्छिन्नं चैतन्यम्। तत्साक्षी तु अन्तःकरणोपहितं चैतन्यम्। (वेदान्तपरिभाषा, पृ.सं. 85)

यः पुरुष वेदानां वेदाङ्गानां च विधिवत् अध्ययनं समाप्य वेदार्थस्य ज्ञानं प्राप्नोति तथा अस्मिन् जन्मनि जन्मान्तरेषु च काम्यनिषिद्धकर्मणां त्यागं कुर्वन् नित्य-नैमित्तिक-प्रायश्चितोपासनानुष्ठानपूर्वकं सर्वमपि कल्मषं निवार्य स्वान्तःकरणं निर्मलं करोति साधनचतुष्टयसम्पन्नश्च भवति स एव पुरुषः वेदान्तविद्यायाः (ब्रह्मविद्यायाः) अधिकारी भवति। स प्रमाता साधनचतुष्टयसम्पन्न अपेक्ष्यते तानि साधनानि इमानि सन्ति–

**नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविरागशमादिषट्सम्पत्तिमुमुक्षुत्वानि।**

**1. नित्यानित्यवस्तुविवेकः** – नित्यत्वं नाम कालानवच्छिन्नत्वमनित्यत्वं नाम तद्विपरीतत्वम्। एकमेव ब्रह्म नित्यं वस्तु अस्ति। तद्भिन्नाः पदार्थाः अनित्यास्सन्ति इतिवत् विवेचनात्मको निश्चयः। 'नित्यं विभुं सर्वगतं सुसूक्ष्मं' 'अजो नित्यः शाश्वतः' इत्यादिः श्रुतेश्च। नित्यानित्यवस्तुविवेकस्यातद्ब्रह्म नित्यं वस्तु ततोऽन्यदखिलमनित्यमिति विवेचनम्।

**2. इहामुत्रार्थफलभोगविरागः** – ऐहिकामुष्मिकविषयेभ्योऽत्यन्तविरागः तथा सांसारिकपदार्थाः मालाचन्दन-वनितादिविषयाणां भोगाः कर्मजन्याः सन्तोऽनित्याः सन्ति तथैव परलोक अमृतादिविषयभोगा अपि अनित्याः भवन्ति। ऐहिकानां स्त्रक्चन्दनवनितादिविषयभोगानां कर्मजन्यतयाऽनित्यत्ववदामुष्मिकाणामप्यमृतादिविषयभोगानामनित्यता तेभ्यो नितरां विरतिरिहामुत्रार्थफलभोगविरागः।

**3. शमादिषट्कसम्पत्तिः** – शमादयस्तु शमदमोपरतितितिक्षासमाधानश्रद्धख्याः। शमस्तावच्छ्रवणादिव्यतिरिक्तविषयेभ्यो मनसो निग्रहः। ब्राह्येन्द्रियाणां तदतिरिक्तविषयेभ्यो निवर्तनम्। निवर्तितानामेतेषां तदतिरिक्तविषयेभ्य उपरमणमुपरतिरथवा विहितानां कर्मणां विधिना परित्यागः। तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता। निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधिः समाधानम्।

**4. मुमुक्षत्वम्** – गुरूपदिष्टवेदान्तवाक्येषु विश्वासः श्रद्धा। मुमुक्षत्वं मोक्षेच्छा।[3]

आचार्यशङ्करानुसार वेदान्तशास्त्रस्य ज्ञाता ए एव भवितुम् अर्हति यः यत्यन्तं शान्तिचित्तः, जितेन्द्रियः, पूर्वोक्तानामनुपालकः, विवेकादिगुणसम्पन्नः, गुर्वाज्ञानुपालकः, मोक्षनिष्ठश्च भवति। तस्मै एव वेदान्तविद्या प्रदेया भवति–

**'प्रशान्तचित्ताय जितेन्द्रियाय च प्रहीणदोषाय यथोक्तकारिणे।**
**गुणान्वितायानुताय सर्वदा प्रदेयमेतत्सततं मुमुक्षवे।।** इति।[4]

यस्य मनः शान्तं भवति इन्द्रियाणि विषयेभ्यो निवृत्तानि भवन्ति, यश्च संन्यासस्य दीक्षां प्राप्नोति, संसारस्य प्रिय-अप्रियघटनाभिः यः विचलितः न भवति, यस्य चित्तं आत्मज्ञानस्य साधनेषु

---

1. वेदान्तसार, पृ.सं. 24
2. वेदान्तसार, पृ.सं. 60
3. वेदान्तसार, पृ.सं. 60
4. उपदेशसाहस्त्री

स्थिरं आत्मनि एकाग्रं भवति सैव आत्मदर्शनं करोति, वेदान्तदर्शने स प्रमाता उच्यते। वेदान्तदर्शनस्य विषयः जीवब्रह्मणो रैक्यम् अस्ति। शुद्धचैतन्यम् अत्र ज्ञानस्य विषयोऽस्ति।[1] शुद्धचैतन्यस्य स्वरूपस्य ज्ञाता पूर्वोक्तयोग्यताभिः युक्तः अपेक्ष्यते।

काश्मीरशैवपरम्परायाः अद्वैतसम्प्रदाये प्रत्यभिज्ञानदर्शने प्रमातुः स्वरूपं व्यवस्थितं प्रतिपादितं अस्ति। अहंप्रत्ययविमर्शात्मकत्वात् अत्र दर्शने शिवोऽहमित्येवंरूपा आत्मानुभूतिः प्रधाना अस्ति। इयमेव प्रमातृनिष्ठताऽस्य दर्शनस्य मूलभित्तिरस्ति। सुष्ठुतया भाति इति प्रमाता भवति अर्थात् यः याथार्थ्येन जानाति सः। अत्र परमशिवः एव प्रमाता, प्रमेयः, प्रमा चास्ति। नात्र काचित् तात्त्विक भेदः। चितिरेव ज्ञाताज्ञान-ज्ञेयरूपेषु आभासते।[2]

परमशिवस्य सर्वोच्चचितिशक्तिः[3] ज्ञातृरूपे विद्यमानाः भवति। परमशिवः (परप्रमाता) जागतिक्यां (ज्ञेयरूपायाम्) अवस्थायां प्रकाशविमर्शरूपः भवति। चितिपदस्य चिन्तनेन, विचारेण वा अभिप्रायः भवति, ज्ञातुरनन्यः गुणः भवति। अनुत्तरस्य विमर्शमयी शक्तिरेव प्रमातुः निमितं भवति। ज्ञातरि उक्ते परमशिवस्य अहं बोधः ज्ञानं भवति। परमशिवस्य विविधरूपेषु बोधः तस्यैव स्वेच्छया भवति।[4] आभासितमिदं विश्वं ग्राह्य-ग्रहक (प्रमेय-प्रमातृ) भेदेन नानाविधं भवति।[5] अभिनवगुप्ताचार्यः प्रमातारं सप्तधा विभिक्ति-शिव-मन्त्रमहेश-मन्त्रेश-मन्त्र-विज्ञानाकल-प्रलयाकल- सकलेति।[6] एषु सप्तप्रमातृषु तत्त्वतः कोऽपि भेदः न भवति। मूलतः प्रमाता एकः अखण्डरूपः शिवः एव भवति। स्वेच्छया शक्त्युद्रेकाच्चायं सप्तधा विभक्तः भवति। सप्तविध-प्रमातुः रेखाचित्रम्-

**सप्तविधप्रमाता-रेखाचित्र[7]:**

| प्रमाता | अधिष्ठाता | प्रमेयाः | वाणी | तत्त्वम् | परामर्शः |
|---|---|---|---|---|---|
| 1. शिवः | शिवभट्टारकः | सर्वं प्रकाशमय-शिवरूपं | परा | शिवः | शिवोऽहं |
| 2. मन्त्रमहेश्वरः | सदाशिव-<br>भट्टारकः | इदं या विश्व का अस्फुट ज्ञानस्य<br>अहमित्यनुभवस्य प्राधान्यम् | पश्यन्ती | सदाशिवः | अहमिदं |
| 3. मन्त्रेश्वरः | ईश्वर- | इदम्परामर्शः अथवा विश्वस्य | पश्यन्ती | ईश्वरः | इदमहम् |

1. विषयो जीवब्रह्मैक्यं शुद्धचैतन्यं प्रमेयं तत्रैव वेदान्तानां तात्पर्यात्। वेदान्तसार, पृ.सं. 70
2. ...यतश्च इयमेव प्रमातृ-प्रमाण-प्रमेयमयस्य विश्वस्य सिद्धौ-प्रकाशने हेतुः...। (प्रत्यभिज्ञाहृदयम् सूत्र 1 की व्याख्या)
3. चितिः स्वतन्त्रा विश्वविद्धिहेतुः। प्रत्यभिज्ञाहृदयम्, 1
4. स्वेच्छया स्वभित्तौ विश्वमुन्मीलयती। (प्रत्यभिज्ञाहृदयम्, 2)
5. तन्नाना अनुरूपग्राह्यग्राहकभेदात्। (प्रत्यभिज्ञाहृदयम्, 3)
6. स च सप्तधा षडर्धशास्त्र एवं परं परमेशेन उक्तः। तत्र शिवाः, मन्त्र महेशाः, मन्त्राः, विज्ञानाकलाः, प्रलयाकलाः, सकलाः, इति सप्त शक्तिमन्तः। (तन्त्रसार, नवम आह्निक, पृ.सं. 51)
7. प्रत्यभिज्ञाहृदयम्, पृ.सं. 106

| | | | | | |
|---|---|---|---|---|---|
| | भट्टारकः | स्फुटः (स्पष्टः) परामर्शः, किन्तु तस्य अहंकारेण सह तादात्यं भवति। अत्र अहम्–इदम् अनयोः परामर्शः तुल्यरूपः भवति। | | | |
| 4. मन्त्रः | अनन्तभट्टारकः | प्रत्येकवस्तुनः भेदज्ञानेऽपि सति आत्मसम्बद्धज्ञानम्, इदम्–अहमनयोस्तुल्यरूपाद्भिन्नम्। | पश्यन्ती | सद्विद्या | इदमिदम् अहमहम् |
| 5. विज्ञानाकलः | ........ | अस्य स्थितिः सद्विद्याया अवरा मायायाः चोत्तरा अस्ति। पूर्व–परिचितप्रलयाकलानां सकलानां च ज्ञानम्। | मध्यमा | विज्ञानाकलः | आणवः तथा मायीयमल |
| 6. प्रलयाकलः | ........ | मायातत्त्वावस्थितः प्रमाता, अहम्–इदम् अनयोः स्पष्टज्ञानरहितः (शून्यः) | मध्यमा | कलातः पुरुषपर्यन्तम् | आणवमलः तथा मायीयमलः |
| 7. सकलः | ........ | प्रत्येकवस्तुनः एकस्मात् अपरस्य विभिन्नतायाः स्वस्माच्च भिन्नतायाः ज्ञानम्, नानात्वस्य अनुभवः। | वैखरी | शेषतत्त्वानि पृथिवीपर्यन्तानि | आणव–मायीय–कार्ममलाः |

वर्तमानां वैश्विकसमस्यानां समाधानस्य सन्दर्भेऽपि प्रमातृ–परिचयस्य भूमिका भवितुमर्हति। नित्यानित्यवस्तुनां विवेकज्ञाने सति मानवस्य विषयासक्तिः समाप्ति यायात्। प्रमातृत्वेऽधिकारित्वे वाऽपि प्राप्ते मानवः आत्मानं प्रकृतेरभिन्नं मनुते। अस्मिन् ज्ञानानुभवे सति भोगवादी दृष्टिकोणः नश्येत भेदभावनाश्च समाप्ता भवेयुः। प्रमातुः व्यवहारस्याधारः तस्य ज्ञानप्रकारः एवम् अस्ति। समाजे यादृशेः प्रमाता भवति तथैव सः सामाजिकविकासं प्रभावयति। प्रत्यभिज्ञादर्शनानुसारं प्रमातृज्ञानस्य (अनुभवस्य) स्तरः तादृशः अस्ति यदनेन सर्वेभ्योऽपि सामरस्यस्य सरसा भूमिरुपलभ्येत। एतयोरूभयोरपि सम्प्रदाययोः प्रमातुः सर्वोच्चावस्था परमतत्त्वस्य प्राप्तिः अस्ति। ज्ञानानुभवस्य एषा उत्कृष्टावस्था पुरतोऽवधार्या भवेत् अनेन च मानवतायाः विकासः सिध्येत।

## सन्दर्भग्रन्थसूची


* ईशादि नौ उपनिषद्, (शंकराचार्यः), गीताप्रेस, गोरखपुर, द्वितीय संस्करण, सं. 2060
* ईश्वरप्रत्यभिज्ञा, (उत्पलदेवः) संपा. मुकुन्दराम शास्त्री, निर्णय सागर प्रेस, बम्बई, 1918
* तन्त्रसारः, अभिनवगुप्त, द्वितीयखण्ड, (संपा.) परमहंस मिश्र, चौखम्बा सुरभारती प्रकाशन, 1996

* तन्त्रसारः, (अभिनवगुप्तः), प्रथमखण्डः, संपा. परमहंस मिश्र, चौखम्बा सुरभारती प्रकाशन, 1996
* तन्त्रालोकः, (अभिनवगुप्तः) संपा. नवजीवन रस्तोगी, मोतीलाल बनारसीदास, वाराणसी, 1986
* तर्कभाषा, (केशवमिश्रः), 'तर्करहस्य दीपिका' हिन्दी व्याख्या विभूषिता, व्याख्याकार आचार्य विश्वेश्वर सिद्धान्तशिरोमणि, चौखम्बा संस्कृत संस्थान, वाराणसी, 1990
* पातञ्जलयोगदर्शनम्, संपा. सुरेश चन्द्र श्रीवास्तव, चौखम्बा सुरभारती प्रकाशन, वाराणसी, 2002
* प्रत्यभिज्ञानहृदयम्, (अभिनवगुप्तः), अनु. जयदेव सिंह, मोतीलाल बनारसीदास, दिल्ली, 2007
* बृहदारण्यकोपनिषद्, (सानुवाद शाङ्करभाष्यसहित), गीताप्रेस, गोरखपुर, सं. 2025
* विवेकचूडामणि, शंकराचार्य, गीताप्रेस, गोरखपुर, सं. 2036
* वेदान्तपरिभाषा, धर्मराजध्वरीन्द्र, व्याख्याकार, गजानन्द शास्त्री मुसलगाँवकर, चौखम्बा विद्याभवन, वाराणसी, 2000
* वेदान्तसार, (सदानन्द), बदरीनाथशुक्ल, मोतीलाल बनारसीदास, दिल्ली, 2009
* शिवदृष्टि, सोमानन्द, (संपा.) मधुसूदन कौन, शोधविभाग जन्मू कश्मीर, श्रीनगर, 1925
* श्रीमद्भगवद्गीता, शांकरभाष्य सहित, गीताप्रेस, गोरखपुर, 2000
* सर्वदर्शनसंग्रह, (माधवाचार्यः), संपादकः उमाशंकर शर्मा 'ऋषि', चौखम्बा विद्याभवन, वाराणसी, 1964

# जैनदर्शने मङ्गलविचारः

डॉ. अनेकान्तकुमारजैनः

**णमो अरहंताणं**
**णमो सिद्धाणं णमो आयरियाणं**
**णमो उवज्झायाणं**
**णमो लोए सव्व साहूणं**
**एसो पंच णमोक्कारो सव्व पावप्पणासणो।**
**मंगलाणं च सव्वेसिं पढमं हवइ 'मंगलं'॥**

भारतीयपरम्परायां 'मङ्गलम्' इति पदमतीव महत्त्वपूर्णमस्ति। जैनपरम्परायामपि मङ्गलस्य विस्तरेण विवेचनं मिलति। षडधिकारकथन- पूर्वकग्रन्थारम्भः कर्तव्य इति जैनाचार्यपरम्परा प्रवर्तते।

भगवत्महावीराणां द्वादशाङ्गेषु द्वादशमङ्गं दृष्टिवादोऽस्ति तस्मिन् श्रीषड्खण्डागमः अस्ति एको भागः यस्य लिपिबद्धरूपेण प्रस्तुतिः श्रीमद्भगवत्पुष्पदंतभूतबलिः प्रथमशताब्द्यां कृता। ग्रन्थोऽस्मिन्नाचार्याः उक्तवन्तः–

**मङ्गल-णिमित्त-हेउं परिमाणं णाम तह य कत्तारं।**
**वागरिय छप्पि पच्छा वक्खाणउ सत्थमायरिओ।।**[1]

मङ्गलाचरणं, शास्त्ररचनाया निमित्तकारणं, ग्रन्थपरिमाणं, ग्रन्थरचनाया मुख्यहेतुः, ग्रन्थनाम, ग्रन्थकर्ता च, एतेषां षण्णामधिकृतपदार्थानां निरूपणं विधायैव शास्त्रविशेषस्य व्याख्यानं विधीयते।

षडखण्डागमग्रन्थोपरि बृहट्टीकाकर्तृभिः श्रीमद्वीरसेनाचार्यदेवैरपि श्रीधवलाग्रन्थे मङ्गलविषये षडधिकाराः निरूपिताः। यथा–मङ्गलं (मङ्गलस्वरूपम्), मङ्गलकर्ता, मङ्गलकरणीयम्, मङ्गलोपायः, मङ्गलविधानम्, मङ्गल-फलमिति च। मङ्गलकर्तारः चतुर्दशविधस्थानपारंगताचार्याः, मङ्गलकरणीय-रूपाः भव्यजनाः, मङ्गलोपायः रत्नत्रयसाधनानि, मङ्गलविधानम्-मङ्गलस्य द्वित्रिप्रभृतिभेदाः।[2] तत्र धातु-निक्षेप-नय-एकार्थ-निरूक्ति-अनुयोगद्वारैः मंगलादयो ज्ञातव्याः।[3]

---

1. षड्खण्डागम- 1/1, 1, सू.1; तथा च, 'मंगलमुपलक्षणं निमित्तहेतुपरिणामनामकर्तृरूपा पञ्चाधिकाराः यथासम्भवं वक्तव्याः।' –तात्पर्यवृत्तिः टीका, पञ्चास्तिकाय, पृ. 6
2. धवला टीका, 1/1/1, पृ. 41
3. वही; सिद्धान्तचिन्तामणिनामधेया टीका, पृष्ठ-30

**मंगलस्य निरुक्तिः**

मङ्गम्– उत्कृष्टसुखं लाति इति मङ्गलम्। अथवा मां पापं गालयति इति मङ्गलम्। आप्तपरीक्षायां उक्तं– 'मंगं लातीति मंगलम्' इति व्युत्पत्तेः। 'मलं गालयतीति मंगलम्' इति वा।[1] यतिवृषभाचार्याः उक्तवन्तः–

**गालयदि विणासयदे धावेदि दहेदि हंति सोधयदे।**
**विद्धंसेदि मलाइं जम्हा तम्हा य मंगलं भणिदं।।**[2]

तथा च

**'मंगं सोक्खं लादि हु गेण्हेदि मंगलं तम्हा'**[3]

बृहत्कल्पभाष्येपि उक्तं–

**'जं गालयते पावं मं लाइ व कहममंगलं तं ते।**
**जा या अणुण्णा सव्वा, कहनिच्छसि मंगलं तं तु।'**[4]

धवलाटीकायामपि उक्तं–

'मलं गालयति विनाशयति दहति हन्ति विशोधयति विध्वंसयतीति मंगलम्'.....अथवा 'मंगं सुखम्, तल्लाति.....आदत्ते इति वा मंगलम्।'[5]

मलयगिरिवृत्त्यनुसारेण– 'मडु' भूषायाम् मण्ड्यते शास्त्रमलंक्रियते- ऽनेनेति मंगलम्'।[6]

इत्थं प्रकारेण जैनाचार्याः विभिन्नेषु ग्रन्थेषु मंगलस्य निरुक्तिं कृतवन्तः।

**मङ्गलस्य भेदाः**

मङ्गलस्यानेके भेदाः सन्ति। सामान्यतया तदेकविधम्, द्रव्यभावभेदेन द्विविधम् अथवा निबद्धानिबद्धभेदेन द्विप्रकारकम्, मुख्यगौणरूपेण च द्विविधम्, सम्यग्दर्शनादिभेदेन त्रिविधं च भवति। एवमेव अरहंत-सिद्ध-साधु-धर्म-भेदात् चतुर्विधम्, ज्ञान-दर्शन-त्रिगुप्तिभेदात् पञ्चविधम्, अर्हत्-सिद्ध-आचार्य- उपाध्याय-साधु-नामोच्चारण भेदात् पञ्चविधम्, किंच नाम स्थापनादिभेदात् षड्विधम्, 'णमो जिणाणं' इत्यादिनानेक विधं वा, मङ्गलं भवति।[7] मङ्गलं च मनोवाक्कायभेदात्

---

1. आप्तपरीक्षा, 11, पृ. 12-13
2. तिलोयपण्णत्ति, गाथा-9 (जैनेन्द्र सि. को. भाग 3, पृ. 240)
3. वही, गाथा-15 (वही,)
4. वृहत्कल्पभाष्य-809, (जैनलक्षणावली, भाग-3, पृ. 902)
5. धवला, पृ.1, पृ.31-33
6. आवश्यक, मलयगिरिवृत्तिः, पृ. 5 (जैनलक्षणावली, भाग-3, पृ. 902)
7. तुलनीय, धवला 1/1/1/39/ तथा पृ. 41, तिलो.प. 1/18

त्रिविधमपि स्वीक्रियते।[1]

**निक्षेपदृष्ट्या मङ्गलं**

यः कस्मिंश्चिदेकस्मिन् निश्चये निर्णये वा क्षिपति स निक्षेपः। निक्षेपस्य नामस्थापनाद्रव्यक्षेत्रकालभावाः षड्भेदाः भवन्ति।[1] प्रथमशताब्द्यां तत्त्वार्थसूत्रे चत्वारि निक्षेपाणि सूचितानि।

**'नामस्थापनाद्रव्यभावतस्तन्न्यासः'**[3]

अत्र न्यासः निक्षेपः एकार्थः 'नि' उपसर्ग पूर्वकं 'क्षिप्' धातोः निक्षेपशब्दः निष्पन्नः। 'अतद्गुणे वस्तुनि संव्यवहारार्थं पुरुषकारान्नियुज्यमानं संज्ञाकर्म नाम निक्षेपः। काष्ठपुस्तचित्रकर्माक्षनिक्षेपादिषु सोऽयमिति स्थाप्यमाना स्थापना' निक्षेपः। गुणैर्गुणान्वा द्रुतं गत गुणैर्द्रोष्यते गुणान्द्रोष्यतीति वा द्रव्यम्' द्रव्यनिक्षेपः। वर्तमानतत्पर्यायोपलक्षितं द्रव्यं भावः' इति भाव निक्षेपः।[4]

निक्षेपदृष्ट्या मङ्गलं षड्विधं यथा नाममङ्गलं, स्थपनामङ्गलं, द्रव्यमङ्गलं, भावमङ्गलं, क्षेत्रमङ्गलं इति च।

**तिलोयपण्णत्तिग्रन्थेपि षड्विधं मङ्गलं प्ररूपितम्[5]–**

**णामणिट्ठावणा दव्वखेत्ताणि कालभावा य।**
**इय छब्भेयं भणियं मंगलमाणंदसंजण्णं।।**

**(i) नाममङ्गलम्**

वाच्यार्थनिरपेक्षो मङ्गलशब्दो नाममङ्गलम्। तस्य मङ्गलस्य आधारो- ऽष्टविधः। तद्यथा– जीवो वा एकजिनेन्द्रदेवस्याश्रयात् यन्मङ्गलं क्रियते तदेकजीवाश्रितमङ्गलमुच्यते।[16] तथैव अनेक- जीवाश्रितमङ्गलम्, एकाजीवा- श्रितमङ्गलम्, अनेकाजीवाश्रितमङ्गलम्, एकजीवेकाजीवाश्रितमङ्गलम्, अनेक जीवाश्रितमङ्गलम्, एकजीवानेकाजीवाश्रितमङ्गलम्, अनेकजीवानेका- जीवाश्रितमङ्गलम्, इति नाममङ्गलस्याष्टाधाराः यतिवृषभाचार्यैः उक्तम्–[7]

---

1. न्यायदीपिका टिप्पण, पृ. 95
2. धवला टीका 1/1, पृ. 8,
3. तत्त्वार्थसूत्र 1/5
4. सर्वार्थसिद्धिः 1/5/22,
5. तिलोय. प. 1/18 तथा च धवला 1/1, 1, 1/10/4
6. वच्चत्थ-णिरवेक्खो मंगलसद्दो णाम मंगलं। तस्स मंगलस्स आधारो अट्ठविहो। तं जहा– जीवो वा, जीवा वा, अजीवो वा, अजीवा वा, जीवो य अजीवो य, जीवा य अजीवा य, जीवो य अजीवा य, जीवा य अजीवा य इदि। धवला 1, पृ. 19
7. तिलोयपण्णत्ति, 1/19

**अरहाणं सिद्धाणं आइरियउवज्झियाइसाहूणं।**
**णामाइं णाममंगलमुद्दिट्ठं वीयराएहिं।।**

### (ii) स्थापनामङ्गलम्

स्थापनामङ्गलं नाम आहितस्य नाम्नः अन्यस्य सोऽयमिति स्थापना स्थापनामंगलम्। तद् द्विविधं सद्भावासद्भावस्थापना चेति। तदाकारवति वस्तुनि सद्भावस्थापना यथा चन्द्रप्रभप्रतिमायां सोऽयं चन्द्रप्रभो भगवान्, तद्विपरीते असद्भावस्थापना यथा पूगादिषु क्षेत्रपालस्थापना इति।[1] यतिवृषभाचार्यैः उक्तं[2]– 'ठवणमंगलभेदं अकट्टिमा-कट्टिमाणि जिणबिंबा।'

### (iii) द्रव्यमङ्गलम्

द्रव्यमंगलं नाम अनागतपर्यायविशेषं प्रतीत्य ग्राह्याभिमुखं द्रव्यं अतद्भावं वा। तद् द्विविधं आगम-नोआगमद्रव्यं चेति।[3] मंगलप्राभृतज्ञायको- ऽनुपयुक्तो, मंगलप्राभृतशब्दरचना वा आगमद्रव्यमङ्गलं। नोआगमद्रव्यमङ्गलं त्रिविधं ज्ञायकशरीरभावितद्व्यतिरिक्तभेदात्। तत्र ज्ञायकशरीरमपि त्रिविधं भाविवर्तमानातीतशरीरभेदात्। तत्रातीतशरीरमपि त्रेधा च्युतच्यावितव्यक्तभेदात्। तद्व्यतिरिक्तं द्विविधं कर्मनोकर्ममंगल भेदात्। तत्र कर्ममंगलं दर्शनविशुद्ध्यादि- षोडशया-प्रविभक्त तीर्थंकर-नामकर्मकारणैः जीवप्रदेशनिबद्धतीर्थंकर-नामकर्म- मांगल्यनिबंधनत्वान्मंगलं। यत्तन्नोकर्ममंगलं तद्द्विविधं लौकिकं लोकोत्तरमिति। तत्र लौकिकं त्रिविधं सचित्तमचित्तं मिश्रमिति।[4]

तत्र सिद्धार्थाः (श्वेतसर्षपाः), पूर्णकुंभादयः अचित्तं, बालकन्याश्वेत- गजादयः सचित्तं, सालङ्कारकन्यादि।। मिश्रमंगलं। लोकोत्तरमंगलमपि त्रिविधं सचित्ताचित्तमिश्रभेदात्। सचित्तमर्हदादीनामनाथनिधन जीवद्रव्यं। अचित्तमंगलं कृत्रिमाकृत्रिमचैत्यालयादिः, न तत्स्थप्रतिमाः तासां स्थापनांतर्भावात्। अकृत्रिमाणां कथं स्थापनाव्यपदेशः इति चेन्न; तत्रापि बुद्ध्या प्रतिनिधौ स्थापितमुख्योप- लम्भात्। तदुभयमपि मिश्रमंगलं।[5]

पञ्चास्तिकायग्रन्थस्य टीकायामपि जयसेनाचार्याः एतेषां पदार्थानां मंगलत्वं प्रदर्शितवन्तः तथा च तेषां भिन्नानि कारणानि प्रदर्शितानि[6]–

**सिद्धत्थ मुणणकुंभों वंदणमाला य पंडुर छत्तं।**
**सेदो वण्णो आदस्स णाय कण्णा य जत्तस्सो।।**

---

1. धवला, पु. 1/1, पृ. 20
2. तिलोयपण्णत्ति, 1/20
3. धवला, पु. 1/1, पृ. 21
4. वही, पृ. 27
5. वही, पृ. 29
6. पञ्चास्तिकाय टीका, पृ. 7, गाथा-7 से

**वयणियमसंजमगुणेहिं साहिदो जिणवरेहिं परमट्टो।**
**सिद्धासण्णा जेसिं सिद्धत्था मंगलं तेण॥**
**पुण्णा मणोरहेहिं य केवलणाणेण चावि संपुण्णा।**
**अरहंता इदि लोए सुमंगलं पुण्णकुंभो दु॥**
**वणिग्गमणपवेसम्हि य इह चउवीसंपि वंदणिज्जा ते।**
**वंदणमालेत्ति कया भरहेण य मंगलं तेण॥**
**सव्वजणणिव्वुदियरा छत्तायारा जगस्स अरहंता।**
**छत्तायारं सिद्धित्ति मंगलं तेण छत्तं तं॥**
**सेदो वण्णो झाणं लेस्सा य अघाइसेसकम्मं च।**
**अरुहाणं इदि लोए सुमंगलं सेदवण्णो दु॥**
**दीसइ लोयालोओ केवलणाणे जहा जिणिंदस्स।**
**तहदीसइमुकुरे बिंबु मंगलं तेण तं मुणह॥**
**जह वीयराय सव्वण्हु जिणवरो मंगलं हवइ लोए।**
**हयरायबालकण्णा तह मंगलमिदि विजाणाहि॥**
**कम्मारिजिणेविणु जिणवरेहिं मोक्खु जिणाहिविजेण।**
**जं चउरउअरिबलजिणइ मंगलु बुच्चइ तेण॥**

यतिवृषभाचार्यैरपि उक्तम्–

**'सूरिउवज्झयसाहूदेहाणि हु दव्वमंगलयं'**[1]

### (iv) क्षेत्रमङ्गलम्–

'गुणपरिणतासन-परिनिष्क्रमण-केवलज्ञानोत्पत्ति परिनिर्वाणक्षेत्रादः क्षेत्रमंगलं। तस्योदाहरणं-ऊर्ज्जयन्त-चम्पा-पावानगरादिः।' अर्धाष्ट रतनादि- पंचविंशत्युत्तर-पंचधनुःशतप्रमाण शरीरस्थित-कैवल्याद्यवष्टब्धाकाशदेशा वा, लोकमात्रात्मप्रदेशैर्लोक-पूरणा-पूरित-विश्वलोकप्रदेशा वा।[2]

यतिवृषभाचार्यैरपि कथितम्[3]

**'गुणपरिदासणं परिणिक्कमणं केवलस्स णाणस्स।**
**उप्पत्ती इयपहुदी बहुभेयं खेत्तमंगलयं॥'**

**एदस्स उदाहरणं पावाणगरुज्जयंतचंपादी।**
**आउट्ठत्थपहुदी पणुवीसब्भहियपणसयधणूणि॥**

---

1. तिलो. 1/20
2. धवला 1/1, पृ. 29-30
3. तिलो. 1/21-24

**देवअवट्ठिदकेवलणाणावट्ठद्धगयणदेसो वा।**
**सेढिघणमेत्तअप्पप्पदेसगदलोय पूरणापुण्णा॥**
**विस्साणं लोयाणं होदि पदेसा वि मंगलं खेत्तं।**
**जस्सिकाले केवलणाणादिमंगलं परिणमति॥**

**( v ) कालमंगलम्**

**परिणिक्कमणं केवलाणाणुब्भवणिव्वुदिप्पवेसादी।**
**पावमलगालणादो पण्णत्तं कालमंगलं एदं॥**
**एवं अणेयभेयं हवेदि तं कालमंगलं पवरं।**
**जिणमहिमा संबंधं णंदीसुरदीवपहुदीओ॥[1]**

इत्युक्तं यतिवृषभाचार्यैः।

यस्मिन् काले केवलज्ञानादिपर्यायैः परिणतः स कालः पापमलगाल- नत्वान्मंगलम्। तस्योदाहरणं परिनिष्क्रमणकेवलज्ञानोत्पत्ति-परिनिर्वाणदिवसादयः। जिनमहिमसंबद्ध-कालोऽपि मंगलं। यथा नन्दीश्वरदिवसादिः।[2]

**( vi ) भावमङ्गलम्**

तिलोयपण्णत्तिग्रन्थे उक्त[3]–'मंगलपज्जाएहिं उवलक्खियजीव दव्वमेत्तं च। भावं मंगलभेदं, भावमंगलं नाम वर्तमानपर्यायोपलक्षितं भावः। स द्विविधः आगमनोआगमभेदात्। आगमः सिद्धान्तः। आगमतो मंगल-प्राभृत- ज्ञायक उपयुक्तादयः, नोआगमतो भावमंगलं द्विविधं उपयुक्तस्तत्परिणत इति। आगमन्तरेण अर्थोपयुक्तः उपयुक्तः। मंगलपर्यायपरिणतस्तत्परिणत इति।[4]

**मंगलस्य अन्यभेदाः**

मङ्गलसामान्यात्तदेकविधम्, मुख्यामुख्यभेदतो द्विविधम्, सम्यग्दर्शनज्ञानचारित्रभेदात् त्रिविधं मंगलम्, धर्मसिद्धसाध्वर्हद्भेदाच्चतुर्विधम्, ज्ञानदर्शनत्रिगुप्तिभेदात् पञ्चविधम्, 'णमो जिणाणं' इत्यादिनानेवविधं वा।[5] तथा च निबद्धानिबद्धौ द्वौ मंगलौ उक्तौ–

**'तच्च मंगलं दुविहं णिबद्धमणिबद्धमिदि'[6]**

---

1. तिलो. 1/25-26
2. धवला टीका 1/1/1, 1, 1,1/30
3. तिलो. 1/27
4. धवला टीका 1/1, 1, 1,1/30
5. धवला 1/1/1, 1, 1, 1/34/3
6. धवला 1/1/1, 1, 1, 1/41/5

पञ्चास्तिकायस्य तात्पर्यवृत्तिटीकायां मुख्यामुख्यभेदेन द्विविधं मंगलं प्रोक्तम्।[1]

**(i) निबद्धानिबद्धमङ्गलम्**

यत्र सूत्रग्रंथस्यादौ सूत्रकर्त्रा श्रीपुष्पदन्ताचार्येण कृतं देवतानमस्कारात्मकं तत् निबद्धमंगलम्।[2] यथा मोक्षमार्गस्य नेत्तारमित्यादि।[3]

**मोक्षमार्गस्य नेत्तारं भेत्तारं कर्मभूभृताम्।**
**ज्ञातारं विश्वतत्त्वानां वन्दे तद्गुणलब्धये।।[4]**

यत् सूत्रग्रन्थस्यादौ सूत्रकर्त्रा न निबद्धदेवतानमस्कारात्मकं तत् अनिबद्धमंगलम्।[5] शास्त्रान्तरादानीतं नमस्कारात्मकम् यत् मङ्गलं यथा जगत्त्रयनाथायेत्यादि।[6]

विद्यानन्दस्वामिभिरप्युक्तम्–'तस्य (मङ्गलस्य) शास्त्रे निबद्धस्या- निबद्धस्यानिबद्धस्य वा वाचिकस्य मानसस्य वा विस्तरतः संक्षेपतो वा शास्त्रकारैरवश्यं करणात्।[7]

**(ii) मुख्यामुख्यमङ्गलम्**

तात्पर्यवृत्तिटीकायां मुख्यामुख्यभेदेन द्विविधं मङ्गलाचरणं प्रोक्तं। तत्र आदौ मध्येऽवसाने च जिनेन्द्रगुणस्तोत्रं मुख्यमङ्गलं तथा च सिद्धार्थाः, पूर्णकुंभादयः बालकन्याश्वेतगजादयः, वन्दनमालाश्वेतछत्रश्वेतवर्णदर्पणाश्वादयः अमुख्यमङ्गलम् इति।[8]

**मङ्गलस्य पर्यायवाचिनः**

धवलाटीकायां मङ्गलस्य पर्यायवाचिनः उच्यते–'मंगलं पुण्यं पूतं पवित्रं प्रशस्तं शिवं शुभं कल्याणं भद्रं सौख्यमित्येवमादीनि मङ्गलपर्याय- वचनानि। एकार्थप्ररूपणं किमर्थमिति चेत्? यतो मङ्गलार्थोऽनेक शब्दाभिधेयस्ततोऽनेकेषु शास्त्रेष्वनेकाभिधानैर्मंगलाथः उच्यते। 'यद्येकशब्देन न जानाति ततोऽन्येनापि शब्देन ज्ञापयितव्यः इति वचनाद्वा।[9] इति वचनात् एकार्थनिरूपणं कृतम्।

---

1. पञ्चा. तात्पर्य. टीका, पृ. 7
2. 'तत्थ निबद्धं णाम, जो सुत्तस्सादीए सुत्त-कत्तारेण कयदेवदा-णमोक्कारो तं णिबद्धमंगलं।'–धवला-पुस्तकं 1, पृ. 42
3. तात्पर्यवृत्तिः, पृ. 9
4. तत्त्वार्थसूत्रम्, प्रथमोऽध्यायः।
5. जो सुत्तस्सादीए सुत्तकत्तारेण ण णिबद्धो देवदाणमोक्कारो तमणिबद्धमंगलं।
–धवला, पृ. 1, पृ. 42
6. तात्पर्यवृत्तिः, पृ. 9
7. आप्तपरीक्षा–कारिका-2/14 पृ. 15-16
8. तात्पर्यवृत्तिः, पृ. 7, श्लोक–4-5, गाथा 6-7
9. धवला 1/1, पृ. 31-33

**मङ्गलस्यानुयोगद्वारम्**

वीरसेनाचार्याः मङ्गलस्यानुयोगद्वारमोक्तवन्तः। तत्र किम् नाम अनुयोगद्वारम्? भव्यमानस्य अर्थस्य अवगमोपायः अनुयोगद्वारं इति कसायपाहुडागमे उक्तम्।[1] उक्तञ्च धवलाटीकायां–

**किं कस्स केण कत्थ व केवचिरं कदिविधो य भावो त्ति।**
**छहि अणिओगद्दारेहि सव्वभावाणुगंतव्वा।।**

अस्यैव स्पष्टीकरणं क्रियते किं मङ्गलं? जीवो मङ्गलं। कस्य मङ्गलं? जीवस्य मंगलं। कैः मंगलं? औदायिकादिभावैः मंगलं, पूजाभक्ति– अणुव्रत–महाव्रतादिप्रशस्तरागरूपौदायिकभावोऽपि मंगलकारणं भवतीत्यर्थः। क्व मंगलम्? जीव मंगलम्। कियच्चिरं मंगलं? नानाजीवापेक्षया सर्वस्याद् वा? एकजीवापेक्षया अनाद्यपर्यवसितं साद्यपर्यवसितं सादिसपर्यवसितं इति त्रिविधम्। कथमनाद्यपर्यवसितता मंगलस्य? द्रव्यार्थिकनयार्पणया। नो आगम– भव्यद्रव्यमंगलापेक्षया वा मंगलमनाद्यपर्यवसानमिति। रत्नत्रयमुपादाया– विनष्टेनैवाप्तसिद्धस्वरूपापेक्षया नैगमनयेन साद्यपर्यवसितं मंगलम्। सादिस– पर्यवसितं सम्यग्दर्शनापेक्षया जघन्येनान्तर्मुहूर्तकालमुत्कर्षेण षट्षष्टिसागरा देशानाः।[2] इति अनुयोगद्वारैः मंगलं वर्णितम्।

**ग्रन्थेषु मङ्गलं कदा करणीयम्?**

शास्त्रादौ शास्त्रमध्ये च– इति त्रिषु स्थानेषु मङ्गलाचरणं करणीयं भवति। उक्तञ्च–

**आदि–अवसाण–मज्झे पण्णत्तं मंगलं जिणिंदेहिं।**
**तो कय–मंगलविणयो इणमो सुत्तं पवक्खामि।।**[3]

तथा च–

**पुव्विल्लाइरिएहिं उत्तो सत्थाण मंगलं जो सो।**
**आइम्मि मज्झअवसाणि य सणियमेण कायव्वो।।**[4]

त्रिषु स्थानेषु मङ्गलं किमर्थम्? इति शंकायाः समाधानं यतिवृषभाचार्यैः कृतम्–

**पढमे मंगलवयणे सिस्सा सत्थस्स पारगा होंति।**
**मज्झिम्मे णीविग्घं विज्जा विज्जाफलं चरिमे।।**[5]

---

1. किमणिओगद्दारं णाम। अहियारो भण्णमाणस्थस्स अवगमोवायो।
– कसायपाहुड, 3/3–22/7/3 (जयधवला)
2. द्रष्टव्य– धवला टीका 1/1, पृष्ठ 37 से 40
3. वही, पृ. 41
4. ति. पण्णात्ति– 1/28
5. ति.प. 1/29

तथा च वीरसेनाचार्यैरपि निरूपितम्– मङ्गलसम्बन्धि-आवश्यक- कृतिकारकाः, तथैव मङ्गलसम्बन्धिप्रायश्चित्त-अनुष्ठातारः, तथैव विनयशीलाः शिष्याः, अध्येतारः, वक्तारश्च क्रमेण आरोग्यं, निर्विघ्न-विद्यां विद्याफलं च क्रमेण प्राप्नुवन्तः– इत्येतदर्थं शास्त्रस्य आदौ, मध्ये, अन्ते चेति त्रिषु स्थानेषु मङ्गलाचरणस्य उपदेशो विहितः।[1]

उक्तञ्च–

**आदिन्हि भद्दवयणं सिस्सा लहु पारया हवंतु त्ति।**
**मज्झे अव्वोच्छित्ती विज्जा विज्जा-फलं चरिमे।।[2]**

इत्थं प्रकारेण शास्त्रेषु मङ्गलं कदा-कदा करणीयं भवति इति निरूपितम्।

गुणधरभट्टारकैः गाथासूत्राणामादौ, यतिवृषभस्थविरैः चूर्णिसूत्रास्यादौ मंगलं कथं न कृतम्? –इति चर्चा विद्यते कसायपाहुडागमोपरि वीरसेनाचार्यविरचित-जयधवलाटीकायाम्। तत्र समाधानमपि कृतम्– न एष दोषः; मंगलं हि क्रियते प्रारब्धकार्यविघ्नकरकर्मविनाशनार्थं। तं च परमागमोपयोगादेव नश्यति। न च इदं सिद्धम्; शुभ-शुद्धपरिणामैः कर्मक्षयाभावे तत्क्षयानुपपत्तिः।[3] इदृशी चर्चा तत्र विस्तरेण उपलभ्यते।

तथा च तात्पर्यवृत्तिटीकायमपि प्रसङ्गोऽयं दृश्यते– "शास्त्रं मंगलामंगलं वा? मंगलं चेत्तदा मंगलस्य कृते मंगलस्य किं प्रयोजनम्?

यद्यमंगलं तर्हि तेन शास्त्रेण किं प्रयोजनम्? आचार्याः परिहारमाहुः भक्त्यर्थं मंगलस्यापि मंगलं क्रियते। तथा चोक्तं–

**प्रदीपेनार्चयेदर्कमुदकेन महोदधिम्।**
**वागीश्वरीं तथा वाग्भिर्मंगलेनैव मंगलम्।।[4]**

अतः शास्त्रादौ निबद्ध रूपेण मंगलाचरणं मिलेत न वा मिलेत, भक्त्यर्थं अस्माभिः अवश्यं करणीयम्। शास्त्रादौ मंगलकरणे नास्ति कापि हानिः।

---

1. 'कय कोउय मंगलपायाच्छित्ता विणयोवगया सिस्सा अज्झेदारो सोदारो वत्तारो आरोग्गमविग्घेण विज्जं विज्जाफलं हि पावेंतु त्ति।'

–धवला 1/1, पृ. 41

2. वही, पृ. 41

3. "संपहि गुणहरभडारएण गाहासुत्ताणमादीए जइवसहत्थेरेण वि चुण्णि सुत्तस्स आदीए मंगलं किण्ण कयं? ण एस दोसो; मंगलं हि कीरदे पारद्धकज्जविग्घयरकम्मदिविणासणट्ठं। तं च परमागमुवजोगादो चेव णस्सदि। ण चेदमसिद्धं; सह-सदासीणासेहि ।"

–जयधवला 1/1, प्र.5

4. तात्त्पर्यवृत्तिः, पृ. 10

**मंगलाचरणस्य प्रयोजनम्**

मंगलाचरणं किमर्थं क्रियते? किं तस्य प्रयोजनम्? जैन शास्त्रेषु तस्य प्रयोजनं निम्नरूपेण दृश्यते–[1]

(i) शिष्टाचारपरिपालनार्थम्।

(ii) नास्तिकतापरिहार्थम्।

(iii) निर्विघ्नतः शास्त्रपरिसमाप्त्यर्थम्।

(iv) श्रेयोमार्गस्य संसिद्ध्यर्थं।

(v) भक्त्यर्थम्।

(vi) पुण्यार्थम्।

(vii) कृतज्ञताज्ञापनार्थम्।

(viii) मंगलार्थम्

(ix) शिष्यशिक्षार्थं च इत्यादिः

उक्तञ्च आप्तपरीक्षायां–

**श्रेयोमार्गस्य संसिद्धिः प्रसादात्परमेष्ठिनः।**
**इत्याहुस्तद्गुणस्तोत्रं शास्त्रादौ मुनिपङ्गवाः॥**[2]

तथा च द्रव्यसंग्रहटीकायां[3]–

**नास्तिकत्वपरीहारः शिष्टाचारप्रपालनम्।**
**पुण्यावाप्तिश्च निर्विघ्नः शास्त्रादौ तेन संस्तुतिः॥**

मंगलाचरणस्य प्रयोजनमधिकृत्य विद्यानन्दाचार्याः शंकासमाधानञ्च कृतवन्तः–

**शंका–** परमेष्ठिगुणस्तोत्रं मंगलार्थं भवति न तु श्रेयोमार्गस्य संसिद्ध्यर्थं इत्येके।

**समाधानम्–**तेऽप्येवं प्रष्टव्याः। किं साक्षान्मंगलार्थं परमेष्ठिगुणस्तोत्रं परम्परया वा? न तावत्साक्षात्, तदनन्तरमेव मंगलप्रसंगात्, कस्यचिदपिमंगला नवास्त्ययोगात्। परम्परया चेत्, न किञ्चिदनिष्टम्। परमेष्ठिगुण– स्तोत्रादात्मविशुद्धिविशेषः प्रादुर्भवेत् धर्मविशेषं स्तोतुः साधयत्यधर्मप्रध्वंसं च।[4]

पुनश्च शंका क्रियते– एवं भगवद्(परमेष्ठी) गुणस्तोत्रं स्वयं मंगलं न तु मंगलार्थं।

---

1. आप्तपरीक्षा स्वोपज्ञटीका, 1/14; तात्त्पर्यवृत्तिः, पृ. 10, द्रव्यसंग्रह टीका–1/1
2. आप्तपरीक्षा–2
3. द्रव्यसंग्रहटीका–1/1, पृ. 5
4. आप्तपरीक्षा 1/11, पृ. 12

**समाधानम्–** इति न मन्तव्यम्; स्वयं मंगलस्यापि मंगलार्थत्वोपपत्तेः। यदा हि मलगालनलक्षणं मंगलं तदा सुखादानलक्षणमंगलाय तद्भवतीति सिद्धं मंगलार्थम्। यदापि सुखादानलक्षणं तन्मंगलं तदा पापगालनलक्षणमंगलाय प्रभवतीति कथं न मंगलार्थम्? यदाऽप्येतदुभयलक्षणं मंगलं तदा तु मंगलान्तरापेक्षया मंगलार्थं तदुपपद्यत एव, अनिश्रेयसप्राप्तेः परापरमंगलसन्ततिप्रसिद्धेः।[1]

**शंका–**शिष्टाचारपरिपालनार्थम्, नास्तिकतापरिहारार्थम्, निर्विघ्नतः शास्त्रपरिसमाप्त्यर्थं च परमेष्ठिगुणस्तोत्रमित्यन्ये अत एव श्रेयोमार्गसंसिद्धयार्थं व्यर्थम्।

**समाधानम्–** तेऽपि तदेव तथेति नियमयि तुमसमर्था एव; तपश्चरणादेरपि तथात्वप्रसिद्धेः। न हि तपश्चरणादिः शिष्टाचारपरिपालनाद्यर्थं न भवतीति शक्यं वक्तुम्। यदि पुनरनियमेन भगवद्गुणसंस्तवनं शिष्टाचार- परिपालनाद्यर्थमभिधीयते तदा तदेव शास्त्रादौ शास्त्रकारैः कर्त्तव्यमिति नियमो न सिद्धयति।[2]

गदौ परापरगुरुप्रवाहस्याऽऽध्यानात् कथं ग्रन्थस्य सिद्धिनिबंधनम्? इति शंकायाः समाधानं विद्यानन्दाचार्याः तत्त्वार्थश्लोकवार्तिके दत्तवन्तः–

'तदाध्यानाद्धर्मविशेषोत्पत्तेरधर्मध्वंसात्तद्धेतुकविघ्नोपशमनादभिमत-शास्त्र-परिसमाप्तित-स्तत्सिद्धिनिबंधनमित्येके। तान् प्रति समादधते। तेषां पात्रदानादिकमपि शास्त्रारंभात् प्रथममाचरणीयं परापर-गुरुप्रवाहाध्यान- वत्तस्यापि धर्मविशेषोत्पत्तिहेतुत्वाविशेषाद्यथोक्तक्रमेण शास्त्रसिद्धि- निबन्धनत्वोपपत्तेः। परममंगलत्वादाप्तानुध्यानं शास्त्रसिद्धिनिबन्धनमित्यन्ये, तदपि तादृगेव। सत्पात्रदानादेरपि मंगलोपपत्तेः। न हि जिनेन्द्रगुणस्तोत्रमेव मंगलमिति नियमोऽस्ति स्वाध्यायादेरेव मंगलत्वाभावप्रसंगात्। परमाप्तानु-ध्यानाद्ग्रंथकारस्य नास्तिकतापरिहार-सिद्धिस्तद्वचनस्यास्ति- कैरादरणीयत्वेन सर्वत्र ख्यात्युपपत्तेस्तदाध्यानं तत्सिद्धिनिबंधनमित्यपरे। तदप्यसारं, श्रेयोमार्गसमर्थनादेव वक्तुर्नास्तिकतापरिहारघटनात्। तदभावे सत्यपि शास्त्रारंभे परमात्मानुध्यानवचने तदनुपपत्तेः।

'शिष्टाचारपरिपालनसाधनत्वात्तदनुध्यानवचनं तत्सिद्धिनिबन्धनमिति केचित्।' तदपि तादृशमेव। स्वाध्यायादेरेव सकलशिष्टाचारपरिपालनसाधन त्वनिर्णयात्। ततः शास्त्रस्योत्पत्तिहेतुत्वात्-तदर्थनिर्णयसाधनत्वाच्च परापरगुरुप्रवाहस्तत्सिद्धिनिबंधनमिति धीमद्धृतिकरम्। ....परापरशास्त्र-प्रवाहस्तन्निबंधनश्च सम्यगवबोधः स्वयमभिमतशास्त्रकरणलक्षण- फलसिद्धेरभ्युपाय इति। तत्कामैराप्तस्सकलोऽप्याध्यातव्य एव।[3] तदकरणे तेषां तत्कृतोपकारविस्मरणादसाधुत्वप्रसङ्गात्। साधूनां कृतस्योपकारस्याविस्मरणप्रसिद्धेः।[4] तदुक्तं–

**'अभिमतफलसिद्धेरभ्युपायः सुबोधः,**
**प्रभवति स च शास्त्रातस्य चोत्पत्तिराप्तात्।**

1. वही, 1/13, पृ. 14
2. वही, 1/14, पृ. 15
3. तत्त्वार्थश्लोकवार्तिकालङ्कारः-1/पृ. 3-5
4. आप्तपरीक्षा, 2/14, पृ. 16

**इति भवति स पूज्यस्तत्प्रसादात् प्रबुद्धै**
**र्न हि कृतमुपकारं साधवो विस्मरन्ति॥**[1]

यदि पुनः स्वगुरोः संस्मरणपूर्वकं शास्त्रकरणमेघोपकारस्तद्विनेयानामिति मतम्, तदा सिद्धं परमेष्ठिगुणस्तोत्रम्, स्वगुरोरेव परमेष्ठित्वात्। तस्य गुरुत्वेन संस्मरणस्यैव तद्गुणस्तोत्रत्वसिद्धेः।[2]

**मंगलस्य फलम्**

अभ्युदय-निःश्रेयससुखादयः सन्ति मंगलस्य फलम्। तत्र सर्वविघ्नविनाशपूर्वकं संसारिकभोगोपभोगानां तथा च स्वर्गस्य प्राप्तिः अभ्युदयरूप फलम् अपि च अतीन्द्रियसुखरूपमोक्षस्य मोक्षमार्गस्य च प्राप्तिः अस्ति निश्रेयसरूपफलम्। उक्तञ्च धवलाटीकायां[3]–

**'मंगलफलं देहिंतो कयअत्भुदयणिस्सेयससुहाइत्तं'**

तथा च तिलोयपण्णत्तिग्रन्थे उक्तम्–

**णासदि विग्घं भेददि मंहो दुट्ठा सुरा ण लंघंति।**
**इट्ठो अत्थो लब्भइ जिणणामग्गहणमेत्तेण॥**[4]

जिननामग्रहणमात्रेण विघ्नानां नाशनं, पापानां खण्डनं, दुष्टदेवानामनुपद्रवः, तथा च इष्टपदार्थानां प्राप्तिः भवति।

इदमेव उक्तं तात्पर्यवृत्तिटीकायां–[5]

**विघ्नाः प्रणश्यन्ति भयं न जातु, न क्षुद्रदेवाः परिलंघयन्ति।**
**अर्थान् यथेष्टांश्च सदा लभन्ते, जिनोत्तमानां परिकीर्तनेन॥**

सामान्यदृष्ट्या वयं सर्वे अनुभवामः यदाकदा मंगलकरणेऽपि निर्विघ्नतादिफलं न भवति। अस्यापि चर्चा तात्पर्यवृत्तिः टीकायां विद्यते[6]– 'किमर्थं शास्त्रादौ शास्त्रकाराः मंगलार्थं परमेष्ठिगुणस्तोत्रं कुर्वन्ति? यदेव शास्त्रं प्रारब्धं तदेव कथ्यतां, मंगलमप्रस्तुतम्? न च वक्तव्यं, मंगलनमस्कारेण पुण्यं भवति, पुण्येन निर्विघ्नं भवति इति। कस्मान्नवक्तव्यमितिचेत्? व्यभिचारात्। तथाहि– क्वापि नमस्कार दानपूजादिकरणेऽपि विघ्नं दृश्यते, क्वापि दानपूजानमस्काराभावेऽपि निर्विघ्नं दृश्यत इति।. .. तदयुक्तं, पूर्वाचार्या इष्टदेवतानमस्कारपुरस्सरमेव कार्यम् कुर्वन्ति, यदुक्तं भवता नमस्कारे कृते पुण्यं भवति पुण्येन निर्विघ्नं भवति इति न च वक्तव्यं तदव्युक्तम्। कस्मात्? देवतानमस्कारकरणे पुण्यं भवति तेन निर्विघ्नं भवतीति तर्कादिशास्त्रे व्यवस्थापितत्वात्।

1. तत्त्वार्थश्लोक, 1/पृ.5
2. आप्तपरीक्षा, 2/14, पृ. 16
3. धवला 1/1/1, पृ. 41- 'मंगल-फलं अब्भुदय निस्सेयस-सुहाइ'।
4. ति.प. 1/30
5. तात्पर्यवृत्तिः, श्लोक 5, पृ. 7
6. वही, पृ. 9

यदुक्तं त्वया व्यभिचारो दृश्यते तदप्ययुक्तम्। कस्मादिति चेत्? यत्र देवतानमस्कारदानपूजादिधर्मे कृतेऽपि विघ्नं भवति तत्रेदं ज्ञातव्यं पूर्वकृतपापस्यैव फलं तत् न च धर्मदूषणं, यत्र देवतानमस्कारदानपूजादि धर्माभावेऽपि निर्विघ्नं दृश्यते तत्रेदं ज्ञातव्यं पूर्वकृतधर्मस्यैव फलं तत् न च पापस्य।'

पुनश्च न्यायदीपिका प्रकाशाख्यटीकायामपि[1] शंकाकारेण शंका क्रियते– 'ननुमङ्गलं न करणीयं निष्फलत्वात्। नहि तस्य किञ्चित्फलमुपलभ्यते। न च निर्विघ्नपरिसमाप्तिस्तत्फलमुपलभ्यत एवेति वाच्यम् समाप्तेर्मङ्गलफलत्वानुपपत्तेः। तथा हि– मङ्गलं समाप्तिं प्रति न कारणम्, अन्वय–व्यतिरेक व्यभिचाराभ्याम्। सर्वत्र स्वन्वयव्यतिरेकविधया। कार्यकारणभावः समधिगम्यते। कारणसत्त्वे कार्यसत्त्वमन्वयः, मोक्षमार्गप्रकाशादौ समाप्त्यदर्शनात्। मङ्गलाभावेऽपि च परीक्षामुखादौ समाप्तिदर्शनात्। अतो अन्वयव्यभिचारो व्यतिरेकव्यभिचारश्च। कारणसत्त्वे कार्यासत्त्वमन्वय व्यभिचारः। कारणाभावे कार्यसत्त्वं च व्यतिरेकव्यभिचार इति न चेतसि विधेयम्; मङ्गलस्य सफलत्वसिद्धेः निष्फलत्वानुपपत्तेः। तद्यथा–मङ्गलं सफलम् शिष्टाचार विषयत्वात् इत्यनुमानेन मङ्गलस्य साफल्यसिद्धेः, तच्च फलं ग्रन्थारम्भे कर्तुर्हृदि 'प्रारब्धमिदं कार्यं निर्विघ्नतया परिसमाप्यताम्' इति कामनाया अवश्यम्भावित्वात् निर्विघ्नसमाप्तिः कल्प्यते। यच्चोक्तम् अन्वयव्यतिरेकव्यभिचाराभ्यामिति, तदयुक्तम्; मोक्षमार्गप्रकाशादौ विघ्न- बाहुल्येन मङ्गलस्य च न्यूनत्वेन समाप्त्यदर्शनात्। प्रचुरस्यैव हि मङ्गलस्य प्रचुरविघ्ननिराकरणकारणत्वम्। किञ्च, यावत्साधनसामग्र्यभावान्न तत्र समाप्तिदर्शनम्। 'सामग्रीजनिका हि कार्यस्य नैकं कारणम्' इति।

1. न्यायदीपिका, प्रकाशाख्यटिप्पणोपेता, पृ. 94

# टी.एस.इलियटमहोदयस्य साहित्यिकसमीक्षासिद्धान्तविमर्शः

**डॉ. सुमनकुमारझाः**

पाश्चात्यसाहित्यिकसमीक्षकेषु टॉमस स्टर्न्स इलियटमहोदयः(1888-1965) महत्त्वपूर्णं स्थानं बिभर्तीति निश्चप्रचम्। टी.एस.इलियटमहोदयस्य वैशिष्ट्यं सर्वथा प्रथितमस्ति पाश्चात्त्यसाहित्यिक-समालोचनाक्षेत्रे कलाक्षेत्रे च । पाश्चात्यकाव्यशास्त्रस्येतिहासे प्लेटोमहोदयादारभ्य अद्यावधि ये ये साहित्यिकसमीक्षका आविर्भूताः, ते सर्वे स्वकीयस्य नवीनचिन्तनस्य कृते प्रसिद्धिमवाप्तवन्तः। तेषु प्लेटो-अरस्तू-लौंजाइनस-हौरेस-जॉनड्राइडन-डॉ. सेमुअलजॉनसन-विलियमवर्डसवर्थ- सैमुअलटेलर-कॉलरिज-टॉलस्टॉय-सैन्तव्यव-शैली-कीट्स-मैथ्यूआर्नल्ड-बेनिदितोक्रोचे-टी.एस.इलियट-आई.ए. रिचर्ड्सप्रभृतयः प्रमुखाः साहित्यिकसमीक्षकाः सन्ति। एतेषु पाश्चात्यसाहित्यकसमीक्षकेषु टी.एस. इलियटमहोदयेन प्रतिपादिताः परम्परासिद्धान्त-निर्वैयक्तिकसिद्धान्तवस्तुनिष्ठसमीकरणसिद्धान्ताः, अन्ये च साहित्यसमीक्षासम्बद्धविचाराः पाश्चात्त्यकाव्यशास्त्रस्य कृते नूनमेव विशिष्टाः सन्ति। पाश्चात्त्यसाहित्यिकसमीक्षायां टी.एस.इलियटमहोदयस्य महत्त्वपूर्णमवदानं स्वीक्रियते

साहित्यदर्शनयोर्गहनाध्येता, प्रसिद्धकविः, सुप्रसिद्धसमीक्षकश्च टी.एस.इलियटमहोदयः 26 सितम्बर 1888 तमे ख्रिस्ताब्दे सेंटलुई, मिसौरी-अमेरिकादेशे जन्म लेभे। हार्वड-पेरिस-आक्सफोर्ड-विश्वविद्यालयेभ्यः शिक्षाऽधिगता इलियटमहोदयेन। तेन पाश्चात्त्यज्ञान-विज्ञानेन, साहित्येन च साकं संस्कृतभाषायाः, पालि-भाषायाः, संस्कृतसाहित्यस्य चाप्यध्ययनं कृतम्। फलत इलियटमहोदयस्य दृष्टिविस्तारः स्वाभाविक एवासीत्। विश्वविद्यालयीयशिक्षां सम्पूर्य इलियटमहोदयः 1915 तमे ख्रिस्ताब्दे लन्दननगरम् आजगाम, तत्पश्चाच्चाजीवनं तत्रैव उवास।

लन्दननगरे 'फेबर एण्ड फेबर' नाम्न्याः प्रकाशनसंस्थाया निदेशकत्वेन, ततः प्रकाशितायाः 'द क्राइटेरियन' इत्यस्याः पत्रिकायाः सम्पादकत्वेन च कार्यभारो निर्व्यूढः। अनया पत्रिकयैव इलियटमहोदयस्यालोचनादृष्टिः, कविताः, चिन्तनशक्तिः, साहित्यिकसमीक्षासिद्धान्ताश्च प्रसृताः। इलियटमहोदयेन यद्यपि कश्चिदपि स्वतन्त्रग्रन्थो न विरचितः, तथापि पञ्चशताधिकेषु साहित्यिकलेखेषु, समीक्षात्मकशोधनिबन्धेषु, समालोचनात्मकभाषणेषु च तस्य साहित्यिकसमीक्षादृष्टिः, काव्यशास्त्रीय-सिद्धान्ताश्च विकीर्णाः सन्ति।

1920 तमे ख्रिस्ताब्दे 'द सैक्रैड वुड' इत्याख्यायां रचनायाम् इलियटमहोदयस्य सुप्रसिद्ध-लेखः (Tradition and the individual talent) प्रकाशितः, यः इलियटमहोदयस्यालोचनाया मूलाधारो मन्यते।

1922 तमे ख्रिस्ताब्दे-**'द वैस्टलेण्ड'** इत्यस्य प्रकाशनं समग्राङ्ग्लसाहित्यस्य कृते महत्त्वपूर्णा घटनाऽऽसीत्। विगत-सप्ततिवर्षेभ्यः टी.एस.इलियटमहोदय आङ्ग्लसाहित्यस्य शीर्षस्थकवित्वेन मूर्धन्यसाहित्यिकसमीक्षकत्वेन च सर्वमान्योऽस्ति। विंशशताब्द्याः सर्वाधिकः प्रभावशालिसाहित्यिक-समीक्षकत्वेन परिगण्यते टी.एस.इलियटमहोदयः पाश्चात्त्यकलासमीक्षाक्षेत्रे। स्वकीयाप्रतिम-वैदुष्येण सर्वश्रेष्ठसमीक्षकत्वेन च पाश्चात्त्यसाहित्यजगति महती प्रसिद्धिः सम्प्राप्ता इलियटमहोदयेन। पाश्चात्त्यसाहित्यिकसमीक्षाया विकासयात्रायाम् इलियटमहोदयस्य महत्त्वपूर्णमवदानं प्रायशः सर्वैः प्राच्यपाश्चात्त्यसमीक्षकैः सर्वात्मना अङ्गीक्रियते। तेन हेतुना **1948 तमे ख्रिस्ताब्दे इलियटमहोदयः साहित्यक्षेत्रस्य कृते विश्वस्य सर्वोच्च-नोबेलपुरस्कारेण सम्मानितः।**

काव्यालोचनासम्बन्धे कारयित्री भावयित्री च प्रतिभे परस्परं पूरकत्वेन विद्येते इति इलियटमहोदयस्य मतम्। तेषां साहित्यसमीक्षासम्बद्धविचाराणामध्ययनाय तद्विरचितानां काव्यानां परिशीलनमावश्यकम्, एवमेव तद्विरचितानां कवितानामवबोधाय तन्निरूपितानां समीक्षासिद्धान्तानां परिशीलनमपेक्षितमस्ति।

**साहित्यसर्जनं कविश्च-**

कविविचाराणां भावभूमिरेव साहित्यसर्जनस्याधारः। अनेनैव कविभिः साहित्यसर्जनं क्रियते। कविचिन्तनस्य, कविदृष्टेः, कविविचाराणाञ्च परीक्षणं मूल्याङ्कनञ्च तद्विरचितेन साहित्येनैव कर्तुं शक्यते। इत्थं यदा कविः साहित्यं रचयति, तत्रापि कविदृष्टिः कविचिन्तनमेव प्रामुख्यं भजते। वस्तुतो जीवनस्य सौन्दर्यमय्यभिव्यक्तिरस्ति साहित्यम्। साहित्यं न केवलं परिपोषयति जीवनं परं साहित्यं मार्गं दर्शयति, साहित्यकारो यत्किमपि पश्यति, दर्शनं करोति, अनुभवति च तदेव निष्ठापूर्वकमभिव्यनक्ति, तदेव स्व-रचनायां वर्णयति। इदमेव तस्य कर्तव्यम्। साहित्यं नाम समाज-दर्शनम्। मानवो यत्किमपि पश्यति,श्रृणोति, प्रेरणां प्राप्नोति, अधीते, शिक्षते तत्सर्वं समाजेन जीवनेन च। अतः साहित्य-जीवनयोः कश्चन घनिष्ठः सम्बन्धः।

**मैथ्यूआर्नाल्डमहोदयस्य** विचारोऽस्ति-**जीवनस्य आलोचनाऽस्ति साहित्यम्। साहित्यं समाजस्य कृते, मानवजीवनस्य कृते किमपि भव्यतरं वस्तु विद्यते, यतस्तत्र मानवजीवनस्य सर्वविधपक्षा निरूप्यन्ते ।**

साहित्य-जीवनयोर्मध्ये स्थापितेऽभिन्नसम्बन्धे सति प्रश्नोऽयं विचारणीयो यत्किं साहित्यं जीवनस्य याथार्थ्यं निरूपयति उत वा जीवनमालोचयति। **विलियमवर्ड्सवर्थमहोदयः** स्वीकरोति यत्- **साहित्यं नाम न केवलं जीवनस्य यथार्थ-भावानां निरूपणमेव, अपितु यथार्थ-निरूपणेन साकं भावानां भावनानां च परिष्करणं, प्रकृत्या सह जीवनस्य सामञ्जस्यमपि साहित्यस्य दायित्वम्।**

वस्तुतः साहित्येन व्यक्तित्वविकासः परिष्कारश्च, भावानां परिष्कारो भावशुद्धिश्च जायन्ते। समग्रतः साहित्ये जीवनस्य यथार्थनिरूपणं, तस्यालोचनञ्च उभ एव जायेते।

**कविः आलोचकश्च-**

इलियटमहोदयः स्व-काव्यं कर्मशालेति (वर्कशाप) स्व-समीक्षासिद्धान्तं च तस्याः कर्मशालाया उत्पाद्यवस्तु (बाईप्राडक्ट) इति कथयति। इलियटमहोदयस्य प्रतिष्ठा कवित्वेन काव्यसमीक्षकत्वेन च ख्याताऽस्ति। इलियटमहोदयस्य साहित्य-सर्जनं, साहित्यिक-समीक्षा च परस्परमन्योन्याश्रिते स्तः। इलियटमहोदयस्य स्थापनायां स्वतन्त्रचित्तकवेः, चिन्तकस्य च समीक्षादृष्टिः समाहिताऽस्ति, यत्र क्लासिकवाद-शास्त्रवाद-परम्परासिद्धान्त-निर्वैयक्तिकता-वस्तुमूलकप्रतिरूपतादीनां सुन्दरः समन्वयः प्राप्यते।

प्रारम्भे इलियटमहोदयेन आलोचनाया लक्ष्यद्वयं निर्धारितम्- **कलाकृतेः विशदनं रुचि-परिष्कारश्च।** परं कालान्तरे तेन विशदन-रुचिपरिष्कारयोः स्थाने **साहित्यस्य बोधः (Understanding of literature ) साहित्यस्य आस्वादश्च** (Enjoyment)स्थापितौ। इलियटमहोदयानुसारं साहित्यसमीक्षाया मूलभूतकार्यमस्ति पाठकस्य कृते साहित्यस्य बोधनम्, काव्यानन्दस्य वर्धनञ्च। समीक्षाया मुख्योद्देश्यं वर्तते कृतीनां विश्लेषणेन सामाजिकानाम् अभिरुचि-परिष्कारः।

इलियटमहोदय आलोचनाया अधोलिखितं कार्यं मनुते-काव्यस्वरूपस्यानुसन्धानम्, उत्तमाधमकाव्येषु भेदनिरूपणम्, साहित्यस्य विद्यमानपरम्परायाः परीक्षणम् , स्थायिकलात्मकमूल्यानां स्थापितमानदण्डानां च समकालिककृतिषु विनियोगः, साहित्यस्य बोध आस्वादनञ्च । एतदर्थं साधनद्वयं निर्धारयति इलियटमहोदयः- तुलनां विश्लेषणञ्च ।

**परम्परासिद्धान्तः- The theory of tradition**

**परम्पराया अवधारणा- Concept of Tradition**

एकोनविंशतिशताब्द्यां विंशतिशताब्देश्च प्रारम्भे सम्पूर्णयूरोपमहादेशे मुख्यतः इंग्लैण्डदेशे साहित्य-समालोचनाया स्थितिः विश्रृंखला आसीत्। स्वच्छन्दतावादस्य प्राबल्यमाविर्भूतम्। एकतः स्वच्छन्दतावादिभिः साहित्ये वैयक्तिक-मनोभावानां प्रकाशनं, भावनात्मकात्माभिव्यञ्जनायाः प्राबल्यं, अतिशय-कल्पना-प्रयोग-बाहुल्यञ्च बहुविधतर्केण स्थापितम्, अपरतो मैथ्यूआर्नल्डप्रतिपादिताः संस्कृति-धर्म-सम्बन्धिन विचारा अपि प्रवर्तिता आसन्, तदानीं **'कलावाद'** सदृश नितान्त-वैयक्तिक-विचारोऽपि आविर्भूतः, यत्र कृतिकारस्य प्राधान्यमासीत्, कृतिस्तु अप्रधाना सञ्जाता। समयेऽस्मिन् इलियटमहोदयस्याविर्भावो जातः। तेनोद्घुष्टम्-

**वास्तविकालोचनाया सूक्ष्म-परिशंसायाश्च लक्ष्यं कविर्न, अपितु काव्यमस्ति।** इत्थं तेन **व्यक्तिवादस्य स्थाने परम्पराया महत्त्वं स्थापितम् , स्थापितश्च परम्परासिद्धान्तः।**

तेन स्वच्छन्दतावादस्याधिपत्यम्, अस्वस्थरूपञ्च निराकृतम्, प्रतिपादितञ्च स्वाभिमतं **क्लासिकवादमतम्।** कलाकारस्यात्मप्रकाशनमेव कला अस्तीति मन्यमानानाम् सिद्धान्तानाम् विस्तृता

आलोचनाऽपि कृता। इलियटमतानुसारं परम्पराया विशिष्टं महत्त्वमस्ति साहित्यसर्जने। कविभ्य ऐतिहासिकबोध आवश्यकः, न केवलम् अतीतस्य अस्तित्वसन्दर्भे, अपितु वर्तमानरूपेऽपि । परम्पराविहीनो वर्तमानोऽप्यग्राह्यो भवति। यथा च–

'Yet if the only form of tradition consisted in following the ways of the immediate generation before us in a blind or timid adherence to its successes, tradition should be positively discouraged ........... novelty is better than repetition ......... the historical sense involves a perception, not only of the pastiness of the past, but of its presence .... The past should be altered by the present as much as the present is directed by the past.[1]

इलियटमतानुसारं परम्परायास्तात्पर्यमस्ति–विकासः संस्कृतिश्च। काव्यरचनायां परम्परायाः प्रामुख्यं भवेत्, कविप्रतिभा तु केवलं मध्यस्थरूपेण काव्येषु परम्परायाः प्रतिफलनाय साहाय्यं प्रददाति। सामुदायिकी संस्कृतिरेव वास्तविकी संस्कृतिरिति।

अतः कविभ्यः समग्र–साहित्यपरम्पराया ज्ञानमावश्यकम्। परम्पराशब्दो जड्–मत–मतान्तर–रूढि–विश्वासेभ्यो नैव योजनीयः। असाध्वमङ्गलं वाऽतीतं प्रति विद्रोहोऽपि परम्पराया एवाङ्गम्। वस्तुतः तदैव विद्रोहमर्हति। परम्पराविच्छिन्नं केवलं मौलिकतायै रचितं साहित्यम् अशिवमपि सञ्जायते। साहित्यसर्जनम् शिवं भवेदेतदर्थमावश्यकं यत्तत्र परम्पराया निर्वाहः स्यात्।

इलियटमतानुसारं सामाजिकजीवनस्याभिव्यक्तिरस्ति साहित्यं, समाजस्य जीवनपद्धतिर्नाम संस्कृतिः। इत्थं संस्कृतिसाहित्ययोर्मध्येऽभेदः सम्बन्धो विद्यते। उभयत्र परम्परासिद्धान्तः समानरूपेण घटते। परम्पराज्ञानमेव साहित्यकारेभ्य इदं निर्दिशति यत्किं–किं जातं, किं–किं कर्तुं शक्यते, किं च करणीयमस्ति। अनेन साहित्यमूल्यमपि ज्ञायते, मूल्यनिर्धारणमपि कर्तुं शक्यते। इलियटमतानुसारं परम्परैव कर्तृभ्यः काव्यमार्गं, काव्यमूल्यञ्च प्रदर्शयति, निर्दिशति च।

परम्परायाः सम्बन्धः संस्कृत्या साकं वर्तते। संस्कृतौ कला–साहित्य–दर्शनानि च सन्निविष्टानि भवन्ति। एतेषामविच्छिन्ना धारा सर्वदा प्रवहते प्रवर्तते च। साहित्येऽपि कविभ्यः परम्पराबोधोऽपेक्षितः। परम्परां विस्मृत्य यदि कविः स्वकीयां संवेदनां, स्वात्मानमेव वा प्रकाशयति, वर्तमानमेवाभिव्यनक्ति तदाऽसौ स्वोद्देश्याद् भ्रान्तो भवति।

उपर्युक्त–परिशीलनेन ज्ञायते यद् इलियटमतानुसारं परम्परायास्तात्पर्यं रूढेरन्धानुकरणं नास्ति। युगानां, कलाकृतीनां, साहित्यिककृतीनां संकलनेन मिश्रितप्रभावेण च परम्पराया रूपं निर्मीयते। कवेः कर्तव्यमस्ति यत्तद् निर्मितं रूपमात्मात्मसात् कुर्यात्, आवश्यकतानुरूपं युगानुरूपं तत्र परिवर्तनं परिवर्धनमपि कुर्यात्। एतदर्थं यदि स्व–व्यक्तित्वसमर्पणमप्यभीष्टं चेत्तत्करणीयं, तत्र सङ्कोचो नैव करणीयः। अतीतस्य वर्तमाने दर्शनं कवेर्मौलिकत्वम्। अत इलियटमहोदयस्य परम्परावादो न तु रूढेरनुपालनमस्ति न वा नवत्वविरोधः।

1. पाश्चात्त्यकाव्यशास्त्र के सिद्धान्त– डॉ. शान्तिस्वरूप गुप्त, पृ0/206

**परम्परा वैयक्तिकप्रज्ञा च- Tradition & Individual talent**

परम्परा-वैयक्तिकप्रज्ञयोः परस्परं विरोधो नास्तीति इलियटमहोदयस्य मतम्। वस्तुतो वैयक्तिकप्रज्ञा (Individual talent) परम्पराविच्छिन्ना, परम्परा-निरपेक्षा नैव भवति, अपितु परम्परा-सापेक्षा, परम्परा-सम्बद्धा भवति प्रज्ञा। परम्परया साकमेव कवयः स्वकीयां प्रतिभां क्षमतां सामर्थ्यं वा अधिक-साफल्येन प्रकर्षतया च प्रयोक्तुं शक्नुवन्ति। इतिहासबोधेन एव व्यक्ती रूढितो मुक्तिं प्राप्नोति। परम्पराया अर्थ एवाऽस्ति तदुपयोगितत्त्वं, यद् युग-युगेभ्यो दायत्वेनास्माभिः प्राप्यते, गृह्यते च, पुनः स्व-कल्याणाय, समाज-विकासाय चोपयुज्यते। कविभ्य अतीत-बोध आवश्यकः। कवीनां सिद्धिरात्मप्रकाशनेन (स्वकीये एकाकिनि निजत्वे) नैव जायतेऽपितु परम्परायाम् इतिहासे च प्रसिद्धानां साहित्यकाराणां, कवीनां , समीक्षकाणां, पुरातनसिद्धसाहित्यिककृतीनां, शास्त्रीयग्रन्थानां परिप्रेक्ष्य एव जायते, अर्थात् परम्परासापेक्षा भवति कविसिद्धिः। यथा चोक्तं तेन- स्व **'**Tradition and the individual talent' **नामक-शोधनिबन्धे-**

'Eliot argues that art must be understood not in a Vacuum, but in the context of previous pieces of art in a peculiar sense [an artist or poet] must inevitably be judged by the standards of the past .'[2]

**निर्वैयक्तिकसिद्धान्तः- Theory of Impersonality**

परम्परायाः परिणामोऽयं यत्कृतिभ्य (साहित्यिक-रचनाभ्यः) आत्मनिष्ठांशः (तत्त्वम्) (subjective element) स्वतो गुणीभूतो जायते, तत्र वस्तुनिष्ठ-तत्त्वं (ovjective element) प्रामुख्यं महत्तां च भजते। साहित्यसर्जनं सर्वथा निर्वैयक्तिकं (Impersonal) भवेदिति इलियटमहोदयस्योद्घोषः। सर्जने व्यक्तित्वस्य प्रकटीकरणं निरर्थकमिति तस्य विचारः। वस्तुतः कवयः स्वकीयं व्यक्तित्वं नाभिव्यञ्जयन्ति, न वा प्रकटयन्ति, तत्तु निमित्तमात्रमस्ति-यत्र संस्कारा, अनुभूतयः विलक्षणरूपेण संयोज्यन्ते। तत्तु तादृशं पात्रमस्ति-यत्र अनन्तसंवेदना-वाक्यखण्ड-वस्तु-पदार्थ-बिम्बादयः सञ्चिता भवन्ति, अथ च तावत् तथैव विलसन्ति यावत् सर्जनकालो नागच्छति। आगते सर्जनकाले ते सर्वे स्वीयं स्वीयं रूपं परित्यज्य, विशिष्टरूपेषु आविर्भूय, कलायाः साहित्यस्य च विग्रहं धारयन्ति। अत एव न महत्त्वं कविव्यक्तित्वस्य, तस्य भावानां, वस्तुगतघटकानाञ्चापि महत्त्वं न वरीवर्ति, अपितु महत्त्वं तु सर्जनप्रक्रियायाः, तीव्रतायाश्च विद्यते, यत्र विविधभावानां परस्परं संयोजनं विलयनं वा भवति, अपि च संयोजनेन विलयनेन तेषां सर्वेषां भावानामेकत्वं सञ्जायते सामान्यीकरणं जायते। अत्र वैयक्तिकप्रज्ञाया महत्त्वं विद्यते, न व्यक्तित्वस्य।

वस्तुतः काव्यं न व्यक्तित्वस्याभिव्यक्तिरपितु ततो मुक्तिः, ततः पलायनमेव साहित्यसर्जनम्। सन्दर्भेऽस्मिन् इलियटमहोदयस्य स्थापना विद्यते- **कविस्तु निमित्तमात्रमस्ति ।** कवितासर्जनं कविनैव

2. Reference received from internet.

क्रियते परमस्मिन् नवसर्जने कवेर्निजधर्मो न प्रवेश्यते। इलियटमहोदयो निगदति- **'कला व्यक्तित्वस्याभिव्यक्तिर्नास्ति प्रत्युत ततः पलायनमेव कला। व्यक्तिगतभावानां प्रकाशनं न प्रत्युत ततो मुक्तिरेव कला इति।'** निरन्तरात्मत्यागेन, व्यक्तित्वबहिष्करणेन एव कवेः प्रगतिः। यथा-

'The progress of an artist is a continual self-sacrifice, a continual extinction of personality.'[3]

इत्थम् इलियटमहोदयस्य निर्वैयक्तिकताया अर्थोऽस्ति-कवेर्व्यक्तिगतभावानां सामान्यीकरणम्। भारतीयाचार्याणामिव इलियटोऽपि मनुते यत्कविना कवितायां स्वकीय-भावानामभिव्यक्तिः क्रियते परमियं तथैव प्रस्तूयते येन ते भावाः सर्व-सामान्यस्य भावा भवन्ति। मतमिदं सर्वैर्ग्राह्यम्, यतो भारतीयकाव्यशास्त्रस्य साधारणीकरणसिद्धान्तोऽपि इदमेव निरूपयति।

**वस्तुमूलकप्रतिरूपता- Objective Correlation**

कलायां भावप्रकाशनाय वस्तुनिष्ठसमीकरणं प्रस्तोतव्यमिति इलियटमहोदयस्य स्थापना । वस्तुमूलकप्रतिरूपता-मार्गेणैव साहित्ये भावाभिव्यञ्जना भावप्रकाशनं वा कर्तुं शक्यते यतो भावोऽमूर्तो भवति, तस्याभिव्यक्तिः केनापि मूर्तसाधनेन करणीया। भावाभिव्यक्तवस्तुनोर्मध्ये सम्बन्धोऽनिवार्यः । यद्यपि समीकरणस्यास्य न सन्ति निश्चितनियमाः, परं किमपि तादृशं वस्तु उपस्थापनीयं, तादृशी संघटना, स्थितिः, घटनाश्रृंखला वा उपस्थापनीया, येन वस्तुना, यया स्थित्या, घटनाश्रृंखलया वा स भावो झटित्येव प्रकाशेत्। वस्तुतो भावनामूर्तविधानयोः पूर्णसामञ्जस्येन एकरूपत्वेन च काव्यस्य साफल्यम्। अनेन विभावविधानेन सामाजिकेषु भावोद्रेकः सम्पद्येत्। यथा चोक्तम् इलियटमहोदयेन-

'The only ways to expressing emotion in the form of art is by finding on objection, correlative in other words, a set of objects, a situation a chain of events which shall be the formula of that particular emotion, so that then the external facts…are given the emotion is immediately evoked.[4]

इत्थम् इलियटमहोदयस्य साहित्यालोचनसिद्धान्तस्य समीक्षणेन ज्ञायते तस्य साहित्यशास्त्रीयं चिन्तनं, साहित्यिकसमीक्षादृष्टिः, कविदृष्टिश्च। अनेन पाश्चात्यसाहित्यिकसमीक्षाजगति तस्यावदानमपि निर्धारयितुं शक्यते।

---

3. पाश्चात्य काव्यशास्त्र के सिद्धान्त- डॉ. शान्तिस्वरूपगुप्त, पृ0/207
4. पाश्चात्त काव्यशास्त्र के सिद्धान्त- डॉ. शान्तिस्वरूपगुप्त, पृ0/209

**संदर्भग्रन्थाः-**

1. पाश्चात्त्यकाव्यशास्त्र के सिद्धान्त- डॉ. शान्तिस्वरूप गुप्त, प्रकाशक:-अशोकप्रकाशन, दिल्ली-6।
2. पाश्चात्त्यकाव्यशास्त्र के सिद्धान्त-डॉ. मैथिलीप्रसादभारद्वाज, हरियाणासाहित्यअकादमी, चण्डीगढ।
3. पाश्चात्त्यकाव्यशास्त्र- डॉ. कृष्णदेव शर्मा, विनोदपुस्तकमन्दिर, आगरा।
4. भारतीय एवं पाश्चात्त्यकाव्यशास्त्र- डॉ.बच्चन सिंह, हरियाणा साहित्य अकादमी, चण्डीगढ।
5. पाश्चात्त्यकाव्यशास्त्र की परम्परा - डॉ. नगेन्द्र।
6. पाश्चात्त्यकाव्यशास्त्र- डॉ. भगीरथ मिश्र।
7. पाश्चात्त्यकाव्यशास्त्र -प्रो. देवेन्द्रनाथ शर्मा।
8. The use of poetry and the use of criticism—By T.S. Eliot, Faber and Faber—3 Queen square, London.
9. Coleridge and Abhinavgupta – Dr Shrikrishan mishra.
10. Western literary criticism, from Plato to present – by A. HABIB.

# आधुनिकसमाजे काव्यशिक्षणम्

**प्रो. चौडूरि उपेन्द्रराव:**

संसारे प्रवृत्ताभिर्विभिन्नाभिर्घटनाभिर्विविधैर्विचारैश्च कवेः हृदयं यदा रसाप्लावितं भवति तदा तस्य लेखिनीतः बहिर्भूतो भवति परमरमणीयः कविताप्रवाहः।[1] 'कवनीयं काव्यम्' इति ध्वन्यालोकलोचने अभिनवगुप्तेनोक्तम्। कवेः कर्म काव्यम्।[2] तत्तु कविहृदये प्रथममाविर्भूय पश्चात् पाठकानां हृदये साक्षात् प्रविशति। संस्कृतसाहित्ये रामायण–महाभारत–रघुवंश–कुमारसंभव–मेघदूत–किरातार्जुनीय–शिशुपालवध–नैषधीयचरितादीनि सुप्रसिद्धानि काव्यानि भवन्ति।

काव्यपठनेन छात्राणां हृदयेषु अनन्तशक्तेः सञ्चारो भवति। धर्मार्थकाममोक्षाणां समुपलब्धि र्भवति।[3] काव्यात् कीर्तिः, धनं, व्यवहारज्ञानम्, अमङ्गल–निवारणं, सद्यः एव परमानन्दानुभूतिः इत्येते भवन्ति।[4] एतैः सर्वैः अपि कारणैः काव्यस्य शिक्षणं प्राधान्यमावहति।

संस्कृतसाहित्ये तु सन्ति बहूनि काव्यानि। सर्वेष्वप्येतेषु काव्येषु आदौ दृश्यश्रव्यभेदेन, पञ्चात् गद्यपद्यचम्पूभेदेन च बहवो प्रकाराः विद्यन्ते। एतेषु सर्वेष्वपि कीदृशं काव्यं छात्रमनोविनोदकं भवति इति आदौ चिन्तनीयम्। यद्यपि सर्वाण्यप्येतानि सहृदयाह्लादकारीणि, तथापि छात्रकक्षास्तरानुगुणं काव्यस्य चयनं भवेत्। विषयेऽस्मिन् प्रथमं लघुत्रयीति प्रसिद्धानां काव्यानां, बृहत्त्रयीति च प्रसिद्धानां काव्यानां क्रमः सर्वदा स्मर्तव्यः। चितं काव्यं छात्रजीवनोपयोग्यं भवेत्। प्रारम्भिके स्तरे सरलस्य शीलनिर्माणक्षमस्यैव काव्यस्य अध्यापनमुचितम्। शृङ्गारादि रसयुक्तकाव्यानां शिक्षणं स्नातकोत्तरकक्षास्वेव भवेत्। बालकाः कथं शृङ्गारादिरसास्वादं कर्तुं प्रभवेयुः?

## काव्यशिक्षाणस्य प्रयोजनम्

काव्यपठनेन छात्राणां हृदयानि विकसन्ति। छन्दोनुगुणं काव्यस्थश्लोकपठनसामर्थ्यमुत्पद्यते। काव्यकथाबोधनशक्तिरुन्नता भवति। उदात्तभावानां परिणतिः भवति। काव्यगतसौन्दर्यानुभूतिः परिवर्धते। विविधविषयविशदीकरणक्षमता प्रवृद्धा भवति। काव्यगतगुणालङ्काररीतिप्रवृत्तिप्रभृतीनां बोधनं भवति। वाच्यलक्ष्यव्यंग्यध्वनिरसादीनामवबोधनं भवति। कल्पनाशक्तेः विकासो भवति। सांसारिकानां विविधभावानामवगमने सारल्यं भवति। अतः काव्यशिक्षणमतिविशिष्टप्रयोजनकरं भवति।

**काव्यशिक्षणपद्धतयः**

काव्याध्ययने एतादृशप्रयोजनसम्पादनार्थं विविधशिक्षाणपद्धातीनां समाश्रयणमावश्यकं भवति। ताः यथा–

1. परम्परागतपद्धतिः
2. नृत्यगीतपद्धतिः
3. व्याख्यापद्धतिः
4. दण्डान्वयपद्धतिः
5. खण्डान्वयपद्धतिः
6. भाष्यपद्धतिः
7. तुलनात्मकपद्धतिः
8. समीक्षापद्धतिः चेति

**परम्परागतपद्धतिः**

पद्धत्यामस्यां श्लोकार्थः सर्वोऽपि अध्यापकेन विशदीक्रियते। यद्यपीयं पद्धतिः प्राचीना, तथापि अद्य बहुषु विद्यालय–महाविद्यालयादिषु इयमेव समाद्रियते। काव्यशिक्षणेऽत्र अध्यापकस्यैव प्रयासो भवति न पुनः छात्रस्य, इत्यनेन कारणेन पद्धतिरेषा नीरसा। अनया पद्धत्या कवित्वशिक्षणम् असम्पूर्णमेव तिष्ठति।

**नृत्यगीतपद्धतिः**

पद्धत्याः अस्याः अनुसारेण अध्यापकः श्लोकाणां गानेन, कदाचित् अभिनयेन च तेषामर्थं विवृणोति। परन्तु पद्धतिरेषा सर्वदा लाभकरी न। अस्यां प्रथमतः सप्तमकक्षापर्यन्तमेव छात्राः उपकृताः भवन्ति। ते एव अनया प्रभाविताः भवन्ति। अस्याः पद्धतेः प्रयोक्तारः अध्यापकाः अपि विरलाः एव।

**व्याख्यापद्धतिः**

श्लोकः अनया पद्धत्या सम्पूर्णरूपेण अवगतः भवति। परन्तु ज्येष्ठैः एव छात्रैः अनया लाभोऽवाप्यते। एषा अपि पद्धतिः अद्य बहुषु विद्यालय–महाविद्यालयादिषु समाद्रियते।

**दण्डान्वयपद्धतिः**

अस्यामादौ प्रधानवाक्यस्य अन्वेषणं भवति। पश्चात् विविधैः प्रश्नैः श्लोकस्य सम्पूर्णमर्थं बोधयितुं प्रयासो विधीयते। परन्तु अनया पद्धत्या श्लोकार्थमवगन्तुं छात्राणां प्राथमिकं संस्कृतज्ञानमावश्यकम्।

**खण्डान्वयपद्धतिः**

अस्यामपि दण्डान्वयवत् प्रधानवाक्यस्य अन्वेषणं तु भवत्येव। परन्तु अस्यां दण्डान्वयवत् कर्तृ-कर्म-क्रियासम्बद्धाः प्रश्नाः न भवन्ति। तेषां स्थाने सर्वनामशब्दानां कः, कम्, केन कस्मै इत्यादीनां प्रयोगो भवति।

**भाष्यपद्धतिः**

एषा भाष्यप्रधाना। अस्यामक्षर-शब्द-पद-आवृत्ति-अनुप्रास, यमक-छन्दोगति-यति-क्रमाणां सर्वेषां विवरणं भवति। अस्यां पद्धतौ काव्यरसास्वादपरिचितिः न्यूना एव भवति। यतोहि काव्यगत बाह्यसौन्दर्यस्यैवात्र प्राधान्यम्।

**तुलनात्मकपद्धतिः**

एषा तुलनात्मिका। अस्याम् अध्यापकः स्वीयश्लोक-विश्लेषणार्थमन्यस्य कस्यचन श्लोकस्य उदाहरणं दत्वा तेन सह स्वीयश्लोकस्य तुलनां कृत्वा विशदीकरोति। इत्थमस्यां पद्धत्यामध्यापकेन महान् श्रमः कर्तव्यो भवति परन्तु सर्वेऽप्यध्यापकाः एतावन्तः परिश्रमिणः न भवन्ति।

**समीक्षापद्धतिः**

पद्धत्यास्यां काव्यश्लोकस्थाः काव्यशास्त्रीयसिद्धान्ताः विशदीक्रियन्ते। अध्यापकः एकां सुदीर्घां सहायकग्रन्थसूचीं दत्वा छात्राय योग्यं मार्गदर्शनं प्रददाति।

काव्यशिक्षणे उपर्युक्ताः एता पद्धतयः प्रख्याताः एव। एतासां विपुलविवरणं अन्येषु ग्रन्थेषु समुपलभ्यते। अतोऽत्र ताः विस्तृतरूपेण न विशदीकृताः।

**काव्यशिक्षणसमस्याः**

एतासां सर्वासां पद्धतीनां प्रयोगार्थं संस्कृतविद्यालय-महाविद्यालय-विश्वविद्यालयादिषु अद्य अनुकूलान्युपकरणानि उचितो वा परिवेशः समुपलभ्यते किम्? इति विचार्यमाणे सति नास्तीत्येव उत्तरं भविष्यति। संस्कृतकाव्यप्रशिक्षणं नाम केवलं काव्यस्य अर्थविवरणं न, परन्तु काव्यगतसंपूर्णसौन्दर्यस्य आस्वादः यावत् न भवति तावत् काव्यशिक्षणस्य उद्देश्यं सम्पूर्णं न भविष्यति। रसात्मकं वाक्यमेव काव्यशब्दव्यपदेश्यं भवति।[6] अग्निपुराणकारेणापि ''वाग्वैदग्ध्य-प्रधानेऽपि रस एवात्र जीवितम्'' इत्युक्तम्। अतो काव्यगतरसास्वादः छात्रैः अधिगन्तव्यः। संस्कृतज्ञानेन विना, सुयोग्याध्यापनेन विना च नायं सम्भवः।

अन्या समस्या अध्यापकानां प्रवृत्तिसम्बद्धा। बहवः संस्कृताध्यापकाः न स्वधर्मनिरताः अद्य। यथा उक्तं, ''वक्तुरेव हि तज्जाड्यं यत्र श्रोत्रा न बुध्यते'' इति, तथेव छात्रस्य सम्पूर्णकाव्यरसास्वादो

न भवति चेत् तत्र अध्यापकस्यैव दोषः। वस्तुतः छात्राणां हृदयेषु प्रत्येकस्याप्यध्यापकस्य विषये एकं पूर्वनिर्धारणं भवति। समुचिताचारविचारसम्पन्नमध्याकं वीक्ष्य छात्रः ''विद्वानेषः, अनेनोक्ताः सर्वेऽपि विषयाः सुग्राह्याः'' इति चिन्तयति। तत्पश्चात् ते उपदेशाः छात्रहृदयेषु घनान्धकारे चन्द्रकिरणा इव साक्षात् निर्विघ्नं प्रविशन्ति। अध्यापकेन तु सर्वासां पद्धतीनां यथोचितं साहाय्यं स्वीकर्तुं शक्यते।

समुचितशिक्षणे विद्यालयपरिवेशस्योल्लेखनीयं स्थानं भवति। अद्य देशस्य प्रायः सर्वेष्वपि विद्यालयमहाविद्यालयेषु विशेषतः संस्कृतविद्यालयेषु स्थितिः विपरीता अस्ति। नैकासु शिक्षासंस्थासु अध्यापकाः अध्यापनासक्ताः न सन्ति। अध्यापकेषु परस्परमारोप-प्रत्यारोपा एव सर्वत्र दृश्यन्ते। एतेषां सर्वेषां दृष्टिः परस्परनिन्दा-प्रशंसाभ्यां संस्कृताध्यापनदिशि परिवर्तनीया भवति। एतत् अनुशासनस्यैव प्राथमिकं कर्तव्यं भवति। परन्तु अद्य संस्कृतसंस्थसु सुदक्षाणाम् अनुशासकानाम् अभावो दृश्यते।

छात्रः अध्यापकात् पादपरिमितं ज्ञानमेव प्राप्नोति। शेषमन्यैः अधिगच्छति। उक्तमेव–

**आचार्यात् पादमादत्ते पादं शिष्यः स्वमेधया।**
**पादं सब्रह्मचारिभ्यः पादं कालक्रमेण च॥** इति।

अत्र शिष्यस्य स्वमेधाशक्तेः वर्धनार्थं, सब्रह्मचारिभ्यः ज्ञानमधिगन्तुं, कालक्रमेणापि ज्ञानप्राप्त्यर्थम् आदौ विद्यालयीयपरिवेशः अध्ययनोपयुक्तो भवेत्।

केचन काव्योपदेष्टारः गुरवः श्लोकान् शुष्कगद्यशैल्यां पठन्ति। तेन छात्रेषु काव्यश्लोकगता रमणीयता नैवावगम्यते। संस्कृतश्लोकेषु सङ्गीतत्वं सहजतया एव अस्ति। अत एव श्लोकाः छान्दोबद्धाः। तस्मात् अध्यापकेन काव्यपाठनावासरे श्लोकाः श्रव्यया शैल्या पठनीयाः। तेन छात्राणां दृष्टिराकृष्टा भवति। तत्पश्चात् छात्रैः शनैः शनैः अध्यापकवचनेषु हृदयं संलग्नीक्रियते। अध्यापकेनापि पश्चात् विविध-पद्धतीनां सहयोगेन काव्याध्यापनं सुलभतया कर्तुं शक्यते।

काव्यपाठो भवतु साहित्यशास्त्रपाठो वा, अद्य संस्कृतविद्यालयेषु अनेके आचार्याः उपविश्यैव अध्यापनं कुर्वन्ति। उपविश्य पाठनेन न केवलं छात्रेषु, अपितु अध्यापकेष्वपि श्रद्धायाः ह्रासो भवति। उत्थाय पाठने छात्राध्यापकयोः उत्साहः द्विगुणितो भवति।

इत्थं समुचितेन प्रयासेन कृतं काव्याध्यापनं सुमुचितानि फलानि प्रदास्यति। विस्मृतप्रायां काव्यपठनप्रवृत्तिं छात्रेषु पुनरुद्बुद्धां कुर्युराचार्याः। विषयेऽस्मिन् महाकवेः कालिदासस्य वचनं सर्वदाऽस्माभि सर्तव्यम्।

**श्लिष्टा क्रिया कस्य चिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता।**
**यस्योभयं साधु स शिक्षकानां धुरि प्रतिष्ठापयितव्य एव॥**

**इति शम्।**

## संदर्भसूची

1. काव्यास्यात्मा स एवार्थः तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः।। इत्यादि।

ध्वन्यालोकः, प्रथमोद्योतः श्लो. सं. 5

2. 'कवते श्लोकान् ग्रन्थते वर्णयति वा कविः' –अमरकोशव्याख्याने भानुजीदीक्षितः। अपि च।
'कु–शब्दे' इति धातोः 'अच इ' इत्यनेन सूत्रेण इ प्रत्यये कृते कविशब्दः निष्पन्नः।
'कवयति इति कविः तस्य कर्म काव्यम्' इत्येषा व्युत्पत्तिः एकावल्यां दृश्यते।

3. धर्मार्थकाममोक्षाणां वैचक्षण्यं कलासु च।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिबन्धनम्।। (काव्यालङ्कारे–भामहः)

4. काव्यं यशसे अर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासम्मितयोपदेशयुजे।
काव्यप्रकाशे प्रथमोल्लासे श्लो. सं. 2

5. 1. रघुवंशः 2. कुमारसम्भवः 3. मेघदूतम् (लघुत्रयी)
1. किरातार्जुनीयम् 2. शिशुपालवधम् 3 नैषधीयचरितम् (बृहत्त्रयी)

6. ''वाक्यं रसात्मकं काव्यम्''। रसस्वरूपं निरूपयिष्यामः। रस एवात्मा साररूपतया जीवनाधायको यत्, तेन विना तस्य काव्यत्वाभावस्य प्रतिपादितत्वात्। 'रस्यते इति रसः' इति व्युत्पत्तियोगाद् भावतदाभासादयोऽपि गृह्यन्ते इत्यादि। (साहित्यदर्पणे, प्रथमपरिच्छेदे, विश्वनाथः)

# भारतीय चिन्तन में कर्मसिद्धान्त एवं समाज-व्यवस्था

**डॉ. संगीता खन्ना**

कर्मसिद्धान्त हिन्दू धर्म परम्परा का महत्त्वपूर्ण पक्ष है। जीवात्मा की संसार-यात्रा हो या सृष्टि के अन्य पदार्थों की क्रिया हो, सर्वत्र कर्म प्रभावी है। कर्म का अर्थ है व्यापार, क्रिया गति। सृष्टि के प्रारम्भ में परब्रह्म में दिखने वाला व्यापार 'कर्म' ही है, जो सृष्टि-संहार के बाद बीज रूप से बना रहता है और पुनः सृष्ट्यारम्भ में पूर्ववत् अंकुरित होने लगता है।[1] जीव द्वारा प्रतिक्षण होने वाले हर सम्भव क्रिया व्यापार को 'कर्म' कहा जाता है, जिसकी बन्धक शक्ति आसक्ति (अज्ञान) है। जैनदर्शन में राग द्वेष (कषाय) को बन्धक शक्ति कहा गया है।[2] कर्म की गति कठिन है–'गहना कर्मणो गतिः'।[3] कर्मस्वरूप, कर्मबन्ध, कर्मविपाक, कर्मफलसंविभाग एवं कर्मक्षय जैसे कर्मसिद्धान्त के विभिन्न पहलूओं का सूक्ष्मातिसूक्ष्म सुव्यवस्थित विश्लेषण करने के बाद जो तथ्य समाने आते हैं, उनमें सबसे पहला नियम यह है कि जहाँ एकबार कर्मविपाक आरम्भ हुआ कि उसके बाद कर्म का व्यापार निर्बाध चलता रहता है। कर्म अनादि है अर्थात् इसका आरम्भ दुर्ज्ञेय है और यह भी गूढ़ है कि मनुष्य इस कर्म चक्र में पहले पहल कैसे बंधा? लेकिन सृष्टि के आरम्भ से ही प्रत्येक प्राणी नामरूपात्मक अनादि कर्म के बन्धन में बंध गया।[4] एक नामरूप का नाश होने पर दूसरे नामरूप की प्राप्ति निश्चित है। इस प्रकार यह चक्र चलता रहता है। प्राणीमात्र को अपने अपने कर्मों के अनुरूप सुख-दुख रूपफल भोगने पड़ते हैं। पूर्वजन्म के कर्मफल का भोग इस जन्म में, वर्तमान जन्म के कर्मफल का भोग अगले जन्म में मिलता है। इतना ही नहीं, प्राणी के कर्मों का फल न मात्र उसे स्वयं ही, बल्कि कभी कभी उसके वंशजों को भी भोगना पड़ता है।[5] जैसे वंशानुगत रोग, वंशानुगत वैभव या द्रारिद्र्य इत्यादि। गीता महाभारत मनुस्मृति इत्यादि में कर्मफल

---

1. येषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे।
   तान्येव प्रतिपद्यन्ते सृज्यमानाः पुनः पुनः।। –महाभारत, शान्ति, 321, 48, 49
2. मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः। –तत्त्वार्थसूत्र, 8. 1
3. गीता, 4. 17
4. कर्मणा बध्यते जन्तुर्विद्यया तु प्रमुच्यते। –महाभारत, शान्ति, 240. 7
5. पापं कर्म कृतं किञ्चिद्यदि तस्मिन्न दृश्यते।
   नृपते तस्य पुत्रेषु पौत्रेष्वपि च नप्तृषु।। –महाभारत, शान्ति, 129, 21

का संविभाग अभिमत है। लेकिन जैन दर्शन कर्म संविभाग को स्वीकार नहीं करता।[1] कर्मवाद की ज्ञप्ति पुनर्जन्मवाद की पोषक है। लेकिन दैववाद या नियतिवाद को प्रश्रय नहीं देती। कर्मबन्धन का मुख्य कारण अज्ञान है और इससे मुक्त होने के लिये ज्ञान परमावश्यक है। नामरूपात्मक जगत् का मूल जो आत्मा, परब्रह्म है वहीं एकमात्र सत् है—इस भाव से परमात्मभाव को प्राप्त होना ही ज्ञान की चरमावस्था है, मुक्ति की स्थिति है। जिसे ब्रह्मज्ञान हो जाता है, उसे कर्म दूषित नहीं करते, वैसे ही जैसे कमलपत्र पर पानी नहीं टिकता।[2] ज्ञानाग्नि में दग्ध कर्म पुनः आत्मा को प्राप्त नहीं करते, उसी प्रकार, जैसे दग्धबीज पुनः अंकुरित नहीं होते।[3] कर्म की संचित प्रारब्ध एवं क्रियमाण—यह तीन अवस्थाएँ मान्य हैं। जैन विचारणा में कर्म की अलग-अलग 11 अवस्थाओं का उल्लेख है। जिनमें से कुछ अवस्था समान है, मात्र नाम का भेद है। मनुष्य के पूर्व और वर्तमान जन्म के कर्म समुदाय को 'संचित कर्म' कहा जाता है, जिसका फलोपभोग अभी प्रारम्भ नहीं हुआ है। इसे अपूर्व और अदृष्ट का नाम भी दिया गया है। 'संचित कर्म' में से जितने कर्मों का फलोपभोग प्रारम्भ हो जाता है, वे 'प्रारब्ध कर्म' (आरब्ध कर्म) कहे जाते हैं और शेष 'अनारब्ध कर्म' कहे जाते हैं। 'क्रियमाण' कर्म की स्वतंत्र श्रेणी है। इसके सम्बन्ध में तिलक की मान्यता है कि यह प्रारब्ध से प्ररित है, लेकिन यह मन्तव्य प्रवृत्ति-स्वातन्त्र्य का हनन कर दैववाद को प्रश्रय देने वाला होने के कारण समुचित प्रतीत नहीं होता। इतना तो ठीक है कि क्रियमाण कर्म पुनः संचितकर्म के अनारब्ध कर्म में सम्मिलित होकर प्रारब्ध कर्म बनते हैं। यही वह बिन्दू है, जहाँ व्यक्ति अपने भोग दण्ड को भोगता हुआ अच्छे कर्म करके तथा बुद्धिमत्तापूर्ण व्यवहार द्वारा अपने भाग्य को अनुकूल बनाने का प्रयास कर सकता है। क्योंकि यदि यह अवकाश न मिले तो व्यक्ति अपने असंयत व्यवहार को भी प्रारब्ध का नाम देकर बचने का प्रयास कर सकता है। इस तरह क्रियमाण कर्म प्रवृत्ति-स्वातन्त्र्य का मार्ग देते हैं। इनसे अतिरिक्त भी कर्म की एक और श्रेणी का उल्लेख मिलता है कि पुण्यकाल में किया गया 'कर्म' अपना फल देने को उन्मुख होता हुआ भी फलपरिपाक तक नहीं पहुँच पाता है।[4] यह जैन दर्शनाभिमत कर्म की 'उपशमनावस्था' के समान है। इसमें से प्रारब्ध कर्म का क्षय तो भोग से ही होता है, लेकिन शेष अनारब्ध कर्म को ज्ञानाग्नि से भस्मसात् किया जा सकता है।[5] यह मान्यता जीवन्मुक्ति-विदेहमुक्ति तथा कर्मविपाक की नियत एवं अनियत स्थिति

---

1. जमिणं जगती पुढो जगा, कम्मेहिं लुप्पति पाणिणो।
   सयमेव कडेहि गाहतिं, णो तस्य मुच्चेज्ज पुट्ठयं।। —सूत्रकृतांगसूत्र, 1. 3. 1. 4
2. छान्दोग्योपनिषद्, 1. 1. 4. 3
3. ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा।। —गीता, 4. 37
4. महाभारत, शान्ति, 290. 17 —गीतारहस्य, पृ. 288
5. गीता, 4. 37

को स्पष्ट करती है। कर्म फल संविभाग[1] एवं असंविभाग[2] दोनों ही अवधारणाओं की पुष्टि हिन्दु धर्म-ग्रन्थों से होती है। मनुष्य अपने कृतकर्मों के अनुसार नया जन्म धारण करता है। पूर्व जन्म में किये गये कर्मों के आधार पर ही मनुष्य का ज्ञान, दर्शन, चरित्र, भाग्य, वंश, आयु, सामाजिक स्थिति, सुख दुख इत्यादि प्राप्त होते हैं। इसी तथ्य का जैन दर्दन में ज्ञानावरणीय आदि आठ कर्मों के रूप में उल्लेख हुआ है।[3] मनुष्य कर्म से बच नहीं सकता। जन्म जन्मान्तर तक कर्म उसका पीछा करते हैं। इसीलिये मनुष्य उनसे छुटकारा पाना चाहता है, जन्म-मरण के चक्र से बाहर आना चाहता है। फलत: 'मोक्ष' मानव जीवन का परम लक्ष्य बन जाता है। उस पर चमत्कार यह कि वही कर्म, जो बान्धता है, कुछ परिवर्तनों के साथ लक्ष्य की सिद्धि में सहायक होता है। स्पष्ट है कि कर्म के मूल में स्थित राग-द्वेष भाव कर्म को बन्धक तथा ज्ञान-ध्यान दोनों कर्म को मोक्ष का परम्परया साधन बनाते है, कर्म ही मनुष्य को नियन्त्रित एवं संयत करने का साधन भी बनता है।

समाज-संरचना के सन्दर्भ में कथित कर्म-सिद्धान्त का निदर्शन यह स्पष्ट करने में सहायक सिद्ध होगा कि कर्म यदि बन्धक है तो मोक्ष के द्वार तक भी यही कर्म लेकर जाता है। मात्र मनुष्य का लक्ष्य स्पष्ट होना चाहिए। जन्म के साथ ही 'मोक्ष' मनुष्य का परम पुरुषार्थ सैद्धान्तिक धरातल पर भले ही मान्य हो, लेकिन व्यावहारिक दृष्टिकोण ये यह सम्भव नहीं। मनुष्य अपने परिवेश, अपनी स्थिति और अपनी सामर्थ्य के अनुरूप छोटे-छोटे लक्ष्यों को प्राप्त करता हुअ परम लक्ष्य तक का सफर तय करता है। लक्ष्य के अनुरूप ही उसके कर्तव्याकर्तव्य का निर्धारण अपेक्षित होता है। जन्म से मनष्यु को क्या प्राप्त है, उसे क्या प्राप्त करना है और कैसे प्राप्त करना है और क्यों प्राप्त करना है? इन सबका समाधान कर्म सिद्धान्त के आधार पर सम्भव है।

सामाजिक सरंचना क्या है? यह सामान्य सा प्रश्न एक शास्त्र का प्रतिपाद्य विषय है। फिर भी, यहाँ इसके मुख्य बिन्दु पर विचार अपेक्षित है, वह है-समाज की ईकाइयों व अंगों के पारस्परिक संबंध और क्रमबद्धता। समाज के मूल स्वरूप को बनाये रखने वाली ईकाइयों, जैसे-व्यक्ति या संस्था या सामाजिक समूह, के पारस्परिक संबंध और क्रमबद्धता का दूसरा नाम सामाजिक संरचना है। समाज में व्यवहार मनुष्य से ही होता है। अत: अन्त: क्रियात्मक नियमन

---

1. संकरो नरकायैव कुलघ्नानां कुलस्य च
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रिया:।। -गीता, 1. 42, मनुस्मृति, 4. 173, महाभारत, आदि., 92. 3
2. गुणान्वयो य: फलकर्मकर्त्ता कृतस्यैव स चोपभोक्ता। -श्वेताश्वतरोपनिषद्, 5. 7
यथा छायातपौ नित्यं सम्बद्धौ च परस्परम्।
तद्वत्कर्म च कर्ता च सुसम्बद्धौ परस्परम्।। -पद्मपुराण, 2. 81 .51
शुभाशुभानि कर्माणि स्वयं कुर्वन्ति देहिन:।
स्वयमेवोपभुज्यन्ते दु:खानि च सुखानि च।। -आध्यात्मिक रामायण, अयोध्या, 9. 14
3. अट्ठ कम्मपगडीओ पण्णत्ताओ तंजहा णाणावरणिज्जं, दरिसणावरणिज्जं, वेयणिज्जं, मोहणिज्जं, आउयं, णामं, गोत्तं, अन्तराइयं। -प्रज्ञापना, 21. 1. 288

के लिये मनुष्य का संयमित होना अनिवार्य है। साथ ही मनुष्य के प्रथम लक्ष्य एवं उसके प्रथम कर्म और धर्म का ज्ञान भी आवश्यक है। इसका निर्धारण हमारी संस्कृति, हमारी परंपरा, उनमें मानित सिद्धान्त करते हैं। व्यवहार की कसौटी पर जब वे सिद्धान्त कसे जाते हैं तो कुछ आदर्श और मान्यताएँ प्रभावित होती है। उनमें से जो व्यवहारसिद्धि (सफल) में सहायक होती हैं वे जुड़ जाती हैं, शेष टूट जाती हैं। और इस प्रक्रिया में कुछ नये मूल्यों की प्रतिष्ठा होती है, जो पुनः परंपरा और संस्कृति को प्रभावित करते है और संस्कृति अपने इन नये समाहित मूल्यों द्वारा व्यक्ति के आचार-व्यवहार को प्रभावित करती है। तथापि जो मूलभूत तथ्य होते हैं, वे यथावत् अक्षुण्ण बने रहते हैं, जिनसे चिरन्तन संस्कृति की पहचान होती है।

कर्मसिद्धान्त के संबंध में भी यही सत्य है। स्वधर्म की नैतिक एवं सांस्कृतिक अवधारणा का सशक्त एवं सफल प्रतिपादन हमारे ग्रन्थों में हुआ है। गुण और कर्म के आधार पर विभाजित स्वधर्म आज के समाज में प्रचलित नहीं है, फिर भी समाज में मनुष्यों को जो पद प्राप्त है या उनके जो कर्म नियत हैं, उनके पालन का धर्म तो यथावत् है। स्वधर्म की अवधारणा वही है, लेकिन आज उसके विभाजन का आधार बदल गया है। यद्यपि इससे स्वधर्म-पालन की प्रक्रिया में कोई अन्तर नहीं आना चाहिए, लेकिन मान्यताओं के हनन से अन्तर तो आता है। अपने नियम कर्म को करता हुआ मनुष्य पाप को नहीं, प्रत्युतः संसिद्धि को प्राप्त करता है। अपने नियत कर्म को यदि ठीक से निर्वाह किया जाए तो सामाजिक व्यवस्था की रक्षा होती है, परस्पर संबंधों में घनिष्ठता बढ़ती है। आध्यात्मिकता का विकास होता है। कर्तव्य समझकर काम करने से अहं का शमन होता है। अहं की तुष्टि के लिए कर्म करने से काम क्रोध लोभादि आसुरी सम्पदा का विकास होने लगता है जो श्रेयस्कर नहीं। कर्तव्य समझकर काम करने से निष्काम कर्म की पुष्टि होती है—इत्यादि स्वधर्म परक मान्यताएँ यथावत् कारगर हैं। काल क्रम में जो परिवर्तन अनिवार्य हैं वे तो हैं हीं, लेकिन जो चिरन्तर सत्य है, उसे नकारा नहीं जा सकता। वह सत्युग का भी सत्य है, कलियुग का भी सत्य ही है। इस तरह कर्म सिद्धान्त का यह पहलू आज भी सामाजिक व्यवस्था के लिए अनुकूल है, अनुपालनीय है।

व्यावहारिक नैतिकता की दृष्टि से विचार करें तो, 'सर्वभूतहित को ध्यान में रखकर कार्य करना श्रेयस्कर है' यह मान्यता जैसे पहले प्रशस्त थी, वैसी ही आज भी है। लोकस्थिति अर्थात् सामाजिक सन्तुलन को परम पुरुषार्थ मानकर स्वकर्म में अनासक्त भाव से रत मनुष्य संसिद्धि प्राप्त करता है। उसमें दैवी सम्पदा (ज्ञान) का विकास यानि अहिंसा, अक्रोध, अद्रोह, करुणा, सत्य, सद्भावना, परोपकार आदि गुणों का विकास होता है। जिसमें अभ्यास से वह परमलक्ष्य मोक्ष को प्राप्त करता है। लोकसंग्रह की प्रवृत्ति का मूलाधार दैवी सम्पदा[1] (छब्बीस सद्गुण) का उत्कर्ष है। इसके विपरीत आसुरी सम्पदा (अज्ञान) के आधिक्य से समाज में विघटनकारी स्थिति उत्पन्न हो

1. दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता। —गीता, 16. 5

जाती है, जो व्यक्तिगत हित में भी नहीं है। राग द्वेषादि के कारण व्यक्ति इस तथ्य को नहीं समझता।[1] स्वार्थ में प्रवृत्त होकर कर्मबन्धन में फँसता जाता है। कर्मबन्ध से मुक्ति के लिये नैतिक गुणों के उत्कर्ष के लिये प्रयत्न करना चाहिए। समाज में स्वस्थ व्यवस्था के लिये व्यक्ति के कर्म का आकलन अनिवार्य है। क्रियमाण कर्म को सुदृढ़ इच्छा शक्ति से स्थिति सुधार के लिये सम्पादित करने में ही श्रेय मानना चाहिए। कर्म फल के प्रति अनासक्ति तथा लोकहित को ध्यान में रखकर कर्म करने का समन्वयात्मक दृष्टिकोण व्यक्ति को आध्यात्कि उत्कर्ष की ओर आकर्षित करता है। जिससे मनुष्य में आवेगों का नियमन होता है। अतः मनुष्य को यथाशक्ति आध्यात्मिक उत्कर्ष के लिए प्रयत्नशील रहना चाहिए। मन और इन्द्रियों को वश में रखकर स्थितप्रज्ञ[2] की अवस्था को प्राप्त होना मानवजीन की आदर्श स्थिति है। स्थितप्रज्ञ अनासक्तभाव से कर्म करता है। सुख-दुख शुभाशुभ में तटस्थ रहता है। मन, बुद्धि से भगवान में भक्तिभाव रखता है। उसमें कर्म, ज्ञान और भक्ति की त्रिवेणी प्रवाहित होती है। वह जीवन्मुक्त या बोधिसत्त्व के समकक्ष होता है। अतः आत्मोत्कर्ष के साथ-साथ लोकहित के लिए इन सभी जीवन मूल्यों एवं मान्यताओं का अभ्यास समाज के सभी वर्गो के लिये अनिवार्य है। इस प्रकार कर्मसिद्धान्त का यह पहलू भी आज की समाज व्यवस्था के लिए अनुकूल है, अनुपालनीय है।

कर्मसिद्धान्त ऐसे अनेकानेक पहलू हैं, जो आज की सामाजिक संरचना में उत्पन्न होने वाली चरमराहट को दूर करने एवं व्यक्तित्व-शोधन में सहायक हो सकते हैं, बशर्त उनका ज्ञान समय रहते प्रत्येक प्राणी को मिलता रहे और तदनुरूप क्रियान्वयन होता रहे।

---

1. प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः।
   काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः।
   मोहाद् गृहीत्वासद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः।। —गीता, 16. 9, 10
2. तानि सर्वाणि संयम्य युक्त आसीत मत्परः।
   वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता।। —गीता, 2. 61

